॥ श्रीः ॥

( २ ) यज्ञविज्ञानविभागे ( २ ) यज्ञविज्ञानपद्धतौ–

# छन्दोभ्यस्ता

विद्यावाचस्पतिः श्रीमान् महार्घ्य मधुसूदनः ।
यज्ञग्रन्थं व्याधात्तेन प्रीयतां यज्ञपूरुषः ॥

समीक्षाचक्रवर्ति, विद्यावाचस्पति, महामहोपदेशक विद्वद्वर
स्व० पण्डित श्री मधुसूदनशर्म मैथिलविरचिता
तत् सूनुना पं०श्रीप्रद्युम्नशर्म्मणा संपादिता ।

सेयं

श्रीमान् धर्मरक्षक, न्यायपरायण, वीराग्रगण्य, रघुकुलभूषण,
नरुवंशावतंस, राजराजेश्वर, अलवरेन्द्रमहाराजाधिराज,
आदर्शनृपति, लैफ्टिनैन्ट कर्नल, सर सवाई श्री १००८
श्री तेजसिंहजीबहादुर के० सी० एस० आई०

सहाय्येन

मुद्रापयित्वा प्रकाशिता

प्रथमावृत्तिः ५०० } वि० सम्वत् २००५



॥ श्रीः ॥

( २ ) यज्ञविज्ञानविभागे ( ३ ) यज्ञविज्ञानपद्धतौ–

# छन्दोभ्यस्ता

विद्यावाचस्पतिः श्रीमान् महार्घ्य मधुसूदनः ।
यज्ञग्रन्थं व्याधात्तेन प्रीयतां यज्ञपूरुषः ॥

समीक्षाचक्रवर्ति, विद्यावाचस्पति, महामहोपदेशक विद्वद्वर
स्व० पण्डित श्री मधुसूदनशर्म मैथिलविरचिता
तत् सूनुना पं० श्रीप्रद्युम्नशर्म्मणा संपादिता ।

सेयं

श्रीमान् धर्मरक्षक, न्यायपरायण, वीराग्रगण्य, रघुकुलभूषण, नरुवंशावतंस, राजराजेश्वर, अलवरेन्द्रमहाराजाधिराज, आदर्शनृपति, लैफ्टिनैन्ट कर्नल, सर सवाई श्री १००८ श्री तेजसिंहजीबहादुर के० सी० एस० आई०

सहाय्येन

मुद्रापयित्वा प्रकाशिता

प्रथमावृत्तिः ५०० } वि० सम्वत् २००५ { 150/-



दी प्रिन्टर्स एण्ड पब्लिशर्स लि०, जयपुर ।

# भूमिका



यह "छन्दोभ्यस्ता" यज्ञविज्ञान के यज्ञपद्धतिविभाग का द्वितीय ग्रन्थ है। इसकी रचना वैदिकभाषा में की गई है जिसके विषय में ग्रन्थ के प्रारम्भ में ही 'भारतीभाषा' शीर्षक एक पृष्ठ पद्य में है। इसके पांच प्रकरण हैं—

१-हविर्यज्ञ, २-महायज्ञ, ३-अतियज्ञ, ४-शिरोयज्ञ और ५-यज्ञपरिशिष्ट।

इनमें अग्न्याधेय आदि ११ प्रकार के यज्ञों का कर्मोपयुक्त संग्रह है, दो रङ्गीन चित्र भी दिये गये हैं। यज्ञसरस्वती के अनुसार यह भी यज्ञ के विषय का बहुत उत्तम ग्रन्थ है।

अशुद्धियों के विषय में हम पहिले भी कई बार लिख चुके हैं। तीन चार बार प्रूफ देख लेने पर भी जब अशुद्धियां रह ही जाती हैं तो प्रायः प्रत्येक ग्रन्थ में शुद्धिपत्र हमें लगाना ही पड़ता है परन्तु उसमें भी पदच्छेद की त्रुटि को पूरा करना कठिन हो जाता है उससे अर्थ का अनर्थ प्रतीत होता है। अतः इसके लिये नम्र निवेदन है कि विज्ञ पाठकवृन्द इस त्रुटि को ठीक करलेने की उदारता करें।

यज्ञसरस्वती की तरह इस छन्दोभ्यस्ता ग्रन्थ का प्रकाशन भी श्रीमान् अलवरेन्द्र महाराज की अनुकम्पा और सहायता से ही हुआ है। इससे श्रीमान् महाराज का विद्याप्रेम और स्वर्गीय पूज्य पिताजी पर आपकी अटल श्रद्धा का पूर्ण परिचय मिलता है। आपके सम्बन्ध में यज्ञसरस्वती की भूमिका में कुछ लिखा जा चुका है उसे पुनः दुहराने की आवश्यकता प्रतीत नहीं होती। श्रीमान् का संस्कृत विद्याप्रेम, उदारता, सौजन्य और धार्मिकता आदि गुणगण विश्वविख्यात हैं। ईश्वर आपको सपरिवार चिरायु करें और आपकी धर्मनिष्ठा इसी प्रकार बनी रहै।

*विद्याधर का रास्ता*
जयपुर सिटी।
२५-६-४८

प्रद्युम्नशर्म्मा ओझा।

॥ श्रीः ॥

# ❋ छन्दोभ्यस्ता नाम यज्ञग्रन्थः ❋

## ब्राह्मी भारती भाषा ।

( १ ) प्राग् मेरोर्वा उत्तरो योऽस्तिदेशस्तत्र स्वर्गो भौम आसीत् पुरात्वे ।
देवा आसुस्तत्र तेषां च शास्त्रं वेदो यज्ञः कर्म्मसिद्धिश्च यज्ञात् ॥ १ ॥
ब्रह्मैत्र स्याद् ब्रह्मविद्वानतोऽमी देवा ब्रह्मज्ञानतो मुक्तिमाप्ताः ।
ऐन्द्रे वाते व्युत्थिते वारुणो योदेशस्तस्मिन्नसुरो वात आभूत् ॥ २ ॥
द्वे वै भाषे पूर्वमास्तां प्रसिद्धे ब्राह्मी दैवी भारते स्वर्ग भूमौ ।
दैवी भाषा ब्राह्मणे मन्त्र भागे ब्राह्मी त्वासील्लोक भाषा प्रचारे ॥ ३ ॥
ब्राह्मी भाषा भारतेऽद्यापि लोके शास्त्रे वादे दृश्यते सुप्रचारा ।
दैवी भाषा ब्राह्मणाद् वेद मन्त्रान्नास्त्यन्यत्र क्वापि दृष्ट प्रचारा ॥ ४ ॥
ब्राह्मी भाषा या द्विधाऽऽसीत् पुरात्वे प्राचामन्या साऽन्यथासीदुदीचाम् ।
न त्वद्यत्वे गृह्यते स प्रभेदः साम्येनाहुर्भारतीया अशेषाः ॥ ५ ॥
देवत्वं ये यज्ञतः प्राप्नवन्तस्तेषामेषा प्रागभूल्लोकभाषा ।
न त्वद्यत्वे ते वसन्तीह लोके तस्मात् तस्या दृश्यते न प्रचारः ॥ ६ ॥

( २ ) अद्यत्वे वै भारते न प्रयुङ्क्ते छन्दोभाषां ग्रन्थ निर्म्माण हेतोः ।
छन्दोभाषासंप्रचारं विधातुं दैव्या ग्रन्थं कर्तुमस्मि प्रवृत्तः ॥ ७ ॥
दैव्याम्नाता भाषया पद्धतिर्या छन्दोऽभ्यस्ता सोच्यते यज्ञ विद्या ।
छन्दो दैवं रूप मस्तीति दैवी भाषा छन्दः शब्दतो लक्ष्यते हि ॥ ८ ॥

## दैवी छन्दो भाषा ।

( ३ ) या वै यज्ञानामावृदेषा पुराणैः प्रागाम्नाता च्छन्दसा भाषयाऽऽसीत् ।
सा दृश्यतेऽद्यापि च भाषया तया छन्दोऽभ्यस्ता नाम यज्ञ प्रयुक्तिः ॥ ९ ॥
यज्ञानामावृद् ब्राह्मणतिप्रदृष्टा या ब्राह्मणे शतपथे सन्निविष्टा ।
तामञ्जसा दर्शितवै विधेयतो व्याकृत्य तर्कादपि गुम्फयामसि ॥१०॥
स वा एतवे शतपथे त्वरेत य एतं यज्ञ मधुसूदनं पठेत् ।
एता यज्ञानामावृतस्तद् विदित्वा विद्यात् तदासां ब्रह्म च ब्राह्मणं च ॥११॥
( ४ ) अग्निः प्रथमो वसुभि र्नो अव्यात् सोमो रुद्रैभिरभि रक्षतु त्मना ।
इन्द्रो मरुद्भिर्ऋतुधा कृणोतु आदित्यैर्नो वरुणः संशिशातु ॥१२॥

॥ इति ॥

❀ श्री: ❀

# १—अथ हविर्यज्ञः प्रथमप्रकरणम् ।

तद्वा एते यज्ञासो भवन्ति—अग्न्याधेयम्, अग्निहोत्रम्, याविहोत्रम्, चातुर्मास्यानि, ज्योतिष्टोमः सबयज्ञः द्वादशाहः, गवामयनम्, सौत्रामणी, पशुबन्धः, मेधयज्ञः, अग्निचित्या इति । एते ह्येव सर्वे यज्ञाः । एतानेवान्वन्ये यज्ञास उपक्लृप्ता भवन्ति ॥

## १—तदग्न्याधेयस्य ।

१—उल्लिखति अद्भिरभ्युक्षति आपं स्पृशति हिरण्यं संभरति । ऊषान् संभरति । आखुकरीषं संभरति । शर्कराः संभरति । तान् वा एतान् पञ्चसंभारान् संभरति । आग्नरेवैतेषां षष्ठः ॥

२—अमावास्यायामेवाग्नी आदधीत । स यासौ वैशाखस्यामावास्या, तस्यामादधीत सा रोहिण्या संपद्यते । यदहरेवैष न पुरस्तान्न पश्चाद् दृश्येत तदहरुपवसेत् । तर्हि ह्येष चन्द्रमा इमं लोकमागच्छति । तस्मादमावास्यायामेवाग्नी आदधीत पौर्णमास्यामन्वारभेत । अमावास्यायां दीक्षेत ॥

३—कृत्तिकास्वग्नी आदधीत । रोहिण्यामग्नी आदधीत । मृगशीर्षे अग्नी आदधीत । पुनर्वस्वोः पुनराधेयमादधीत । फाल्गुनीष्वग्नी आदधीत—पूर्वयोर्वा उत्तरयोर्वा । हस्ते अग्नी आदधीत य इच्छेत् प्र मे दीयेतेति । चित्रायामग्नी आदधीत । एतत क्षत्रिय एव नक्षत्रमुपेत्सेत् । सूर्य्यनक्षत्र एव स्यात् ॥२॥

४—स वै यत्रोदगावर्तते तर्ह्यग्नी आदधीत ॥३॥ ब्राह्मणो वसन्ते । क्षत्रियो ग्रीष्मे । वैश्यो वर्षासु ॥४॥ स यः कामयेत—ब्रह्मवर्चसी स्यामिति, वसन्ते स आदधीत । अथ यः कामयेत—क्षत्रं श्रिया यशसा स्यामिति, ग्रीष्मे स आदधीत । अथ यः कामयेत—बहुः प्रजया पशुभिः स्यामिति, वर्षासु स आदधीत । यदैवैनं कदा च यज्ञ उपनमेद्थाग्नी आदधीत, न श्वः श्वमुपासीत ॥५॥

## अङ्गोपचारः ।

५—यदहरस्य श्वोऽग्न्याधेयं स्याद् दिवैवाश्नीयात् । तद्वपि काममेव नक्तमश्नीयात् ॥१॥ तद्धैकेऽजमुपबध्नन्ति । तदु तथा न कुर्य्यात् । यद्यस्याजः स्याद्—अग्नीध्र एवैनं प्रातर्दध्यात् ॥२॥ अथ चात्तुः प्राश्यमोदनं पचति । तदु तथा न कुर्य्यात् ॥३॥

६—तस्य सर्पिरासेचनं कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्त्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधति तदु तन्नाद्रियेत ॥४॥ स काममेव स्वध्यात् ॥५॥

## २—अपूर्वाधेयम्।

७—आधानम्। तद्धैके ऽनुदिते मथित्वा तमुदिते प्राञ्चमुद्धरन्ति। तदु तथा न कुर्य्यात्। य उदिते आहवनीयं मन्थेत् सह तत् पर्य्याप्नुयात् ॥५॥ नर्चा न साम्ना न यजुषाग्निराधीयते ब्रह्मणो ह्येवैष ब्रह्मणाधीयते ॥७॥ सवै भुर्भुवः इत्येतावतैव गार्हपत्यमादधाति। भूर्भुवःस्वरिति पञ्चभिराहवनीयम् ॥८॥

८—यत्राग्निं मन्थिष्यन्त्स्यात् तदश्वमानेतवै ब्रूयात्। स पूर्वेणोपतिष्ठते। स वै पूर्ववाट् स्यात्। यदि पूर्ववाहं न विन्देद्—अपि य एव कश्चाश्वः स्यात्। यद्यश्वं न विन्देद्—अप्यनड्वानेव स्यात् ॥१॥ तं यत्र प्राञ्चं हरन्ति तत्पुरस्तादश्वं नयन्ति। तं वै तथैव हरेयुर्यथैनमेष प्रत्यङ्ङुपाचरेत् ॥२॥ अथाश्वमाक्रमयति। तमाक्रमय्य प्राञ्चमुन्नयति। तं पुनरावर्तयति। तमुदञ्चं प्रमुञ्चति ॥३॥ तमश्वस्य पदे आधत्ते ॥४॥ स वै तूष्णीमेवाग्र उपस्पृशति। अथोद्यच्छति। अथोपस्पृशति। भूर्भुवः स्वरित्येव तृतीयेनादधाति एतन्न्वेकम्। अथेदं द्वितीयम्। तूष्णीमेवाग्रे उपस्पृशति, अथोद्यच्छति भूर्भुवः स्वरित्येव। द्वितीयेनादधाति। तदु हैतत् पश्वेव दध्रिरे आसुरिः पाञ्चिर्माधुकिः सर्वं वा अन्यदियसितमेव प्रथमेनैवोद्यत्यादध्यात् भूर्भुवः स्वरिति तदेवानियसितमिति अतो यतमथा कामयेत तथा कुर्य्यात् ॥५॥ अथ पुरस्तात् परीत्य पूर्वार्द्धमुल्मुकानामभिपद्य जपति—

९—द्यौरिव भूम्ना पृथिवीव परिम्णा, तस्यास्ते पृथिवि देवयजनिपृष्ठेऽग्निमन्नादमन्नाद्यायादधे। इति। सैषाऽऽशीरेव। स यदि कामयेत—जपेदेतत्। यद्यु कामयेत अपि नाद्रियेत् ॥६॥ अथ सार्पराज्ञ्या ऋग्भिरुपतिष्ठते ॥७॥

( पूर्णाहुतिः )

१०—उद्धृत्याहवनीयं पूर्णाहुतिं जुहोति। तां वै पूर्णां जुहोति। स्वाहाकारेण जुहोति। तस्यां वरं ददाति ॥८॥

११—तदाहुः—एतामेवाहुतिं हुत्वाऽथोत्तराणि हवींषि नाद्रियेत् ॥ तद्वु निर्वपेदेवोत्तराणि हवींषि ॥

१२—स वा अग्नये पवमानाय निर्वपति ॥१॥ अथाग्नये पावकाय निर्वपति ॥२॥ अथाग्नये सुचये निर्वपति ॥३॥१०॥ केवलबर्हिः प्रथमं हविर्भवति। समानबर्हिषी उत्तरे ॥११॥ अष्टाकपालाः सर्वे पुरोडाशा भवन्ति। तानि सर्वाणि चतुर्विंशतिः कपालानि संपद्यन्ते ॥१२॥

१३—अथादित्यै चरुं निर्वपति। तस्यै विराजौ संयाज्ये स्यातामित्याहुः। अथो त्रिष्टुभौ। अथो जगत्यौ॥ विराजावित्येव स्याताम् ॥१३॥ तस्यै धेनुर्दक्षिणा ॥१४॥ एतन्वेकमयनम्। अथेदं द्वितीयम्॥ आग्नेयमेवाष्टाकपालं पुरोडाशं निर्वपति। अथादित्यै चरुं निर्वपति ॥१५॥

( दक्षिणादानम् )

१४—दक्षिणा ददाति। ता वै षड् दद्यात्। द्वादश दद्यात्। चतुर्विंशतिं दद्यात्। एषा मात्रा दक्षिणानाम्। दद्यात् त्वेव यथाश्रद्धं भूयसीः ॥१॥

तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः। सत्यमेव वदेत् ॥२॥

## ३—अथ पुनराधेयम्।

१—पुनराधेयमादधीत। स वै वर्षास्वादधीत। मध्यन्दिन एवादधीत ॥१॥ तं वै दर्भैरुद्धरति ॥२॥ अर्कपलाशाभ्यां व्रीहिमयमपूपं कृत्वा यत्र गार्हपत्यमाधास्यन् भवति तन्निदधाति। तद् गार्हपत्यमादधाति। अर्कपलाशाभ्यां यवमयमपूपं कृत्वा यत्राहवनीयमाधास्यन् भवति तन्निदधाति। तदाहवनीयमादधाति। तदु तथा न कुर्य्यात् ॥३॥ आग्नेयमेव पञ्चकपालं पुरोडाशं निर्वपति। तस्य पञ्चपदाः पंक्तियो याज्यानुवाक्या भवन्ति ॥४॥ सर्व आग्नेयो भवति। तेनोपांशु चरन्ति। उच्चैरुत्तममनुयाजं यजति ॥५॥

२—स आश्राव्याह 'समिधो यज'–इति। 'अग्नीन् यज'–इति त्वेव ब्रूयात् ॥१॥ स जयति—

अग्न आज्यस्य व्यन्तु बौभक् ॥१॥
अग्निमाज्यस्य वेतु बौभक् ॥२॥
अग्निनाज्यस्य व्यन्तु बौभक् ॥३॥
अग्निराज्यस्य वेतु बौभक् ॥४॥

अथ स्वाहाग्निमित्याह। स्वाहाग्निं पवमानम्। स्वाहाग्निमिन्दुमन्तम्। स्वाहाग्निम्। स्वाहाग्नीनाज्यपान् जुषाणो अग्निराज्यस्य वेतु"—इति यजति ॥२॥

३—अथाह—'अग्नयेऽनुब्रूहि"--इति। सोऽन्वाह--अग्निं स्तोमेन बोधय समिधा नो अमर्त्यम्। हव्या देवेषु नोदधत्॥ इति॥ "जुषाणो अग्निराज्यस्य वेतु"--इति यजति ॥३॥

४--अथ यद्यग्नये पवमानाय ध्रियेरन् अग्नये पवमानायानुब्रूहीति ब्रूयात्। सोऽन्वाह—अग्न आयूंषि पवसे आसुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्" ॥ इति॥ "जुषाणो अग्निः पवमान आज्यस्य वेतु"--इति यजति ॥४॥

५--अथ यद्यग्नये इन्दुमते म्रियेरन् अग्नये इन्दुमतेऽनुब्रूहीति ब्रूयात् ॥ सोऽन्वाह--एह्यू षु ब्रवाणि ते अग्न इत्थेतरा गिरः। एभिर्वर्धास इन्दुभिः"--इति ॥ "जुषाणो अग्निनारिन्दुमानाज्यस्य वेतु"--इति यजति ॥५॥

६--अथाह--"अग्नयेऽनुब्रूहीति हविषः। अग्निं यजति ॥ अग्नये स्विष्टकृतेऽनुब्रूहि--"अग्निं स्विष्टकृतं यज"--इति ॥ स यजति--

अग्नेर्वसुवने वसुधेयस्य वेतु बौभक् ॥१॥

अग्ना उ वसुवने वसुधेयस्य वेतु बौभक् ॥२॥

देवो अग्निः स्विष्टकृदिति स्वयमाग्नेयस्तृतीयः ॥ एवं वाग्नेयाननुयाजान् करोति ॥ ता वा एताः षड् विभक्तीर्यजति--चतस्रः प्रयाजेषु द्वे अनुयाजेषु ॥६॥ न द्वे च न सह ॥७॥ 'व्यन्तु वेतु'--इत्येव प्रयाजानां रूपं, वसुवने वसुधेयस्येत्यनुयाजानाम् ॥८॥

७--तस्य हिरण्यं दक्षिणाऽनड्वान् वा ॥९॥ ( इति पुनराधेयम् ) ॥

एतन्न्वग्न्याधेयम् प्रथमा यज्ञसंस्था ॥१॥



## २—अथ अग्निहोत्रस्य।

१—अग्निहोत्रम् होतव्यम् ॥ १ ॥ स सायमस्तमिते जुहोति, अथ प्रातरनुदिते जुहोति ॥ उदितहोमिनां विच्छिन्नमग्निहोत्रं मन्यामहे—इति ह स्माहासुरिः ॥ २ ॥ तदाहुः—सोमेवान्ये यज्ञास्तिष्ठन्ते, अग्निहोत्रमेष न संतिष्ठते ॥ ३ ॥

२—तद्दुग्ध्वाऽधिश्रयति। अधिश्रित्यैव जुहुयात् ॥ तदवज्योतयति। अथापः प्रत्यानयति ॥ १ ॥ यद्येनं क्षीरं केवलं पानेऽभ्याभवेद्—उदरतोऽकमाश्चोतयितवै ब्रूयात् ॥ २ ॥ अथ चतुरुन्नयति ॥ ३ ॥ अथ समिधमादायोदाद्रवति ॥ ४ ॥ सोऽनुपसाद्य पूर्वामाहुतिं जुहोति, उपसाद्योत्तराम् ॥ ५ ॥ स वै द्विरग्नौ जुहोति, द्विरुपमार्ष्टि, द्विः प्राश्नाति, चतुरुन्नयति ॥ ६ ॥ सा या पूर्वाहुतिः साऽग्निहोत्रस्य देवता। अथ योत्तरा स्विष्टकृद्भाजनमेव सा ॥ या पूर्वाहुतिस्तां मन्त्रेण जुहोति, अथ योत्तरा तां तूष्णीं जुहोति ॥ ७ ॥ स वै कनीय इव पूर्वामाहुतिं जुहोति, भूय इवोत्तराम्, भूय इव स्रुचि परिशिनष्टि।

३—स सायं जुहोति—"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा"—इति। अथ प्रातः—"सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा"—इति ॥ १ ॥

४—तदु हैतदेवारुणये ब्रह्मवर्चसकामाय तत्रानूवाच—अग्निर्वर्चो ज्योतिर्वर्चः, सूर्यो वर्चो ज्योतिर्वर्चः',—इति ॥ २ ॥ अनेनैव जुहुयात्—"सजूर्देवेन सवित्रा, सजू रात्र्येन्द्रवत्या, जुषाणो अग्निर्वेतु स्वाहा"। अथ प्रातः—"सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या, जुषाणः सूर्यो वेतु स्वाहा"—इति ॥ ३ ॥ यत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टम्। अथ यत् स्थाल्यां तद् य एव कश्च पिबेत्। तद्धि ना ब्राह्मणः पिबेत ॥४॥

५—एता ह वै देवता योऽस्ति तस्मिन् वसन्ति इन्द्रः[1], यमो राजा[2], नडो नैषधः[3], अनशनन् सांगमनः[4], असन् पांसवः[5] ॥ १ ॥ तद्वा एष इन्द्रो यदाहवनीयः ॥ १ ॥ अथैष यमो राजा यद्गार्हपत्यः ॥ २ ॥ अथैष नडो नैषधो यदन्वाहार्य्यपचनः ॥ ३ ॥ अथैषोऽनशनन् सांगमनो य एष सभायामग्निः ॥ ४ ॥ अथैषोऽसन् पांसवो यदेतद्भस्मोद्धृत्य परावन्ति ॥ ५ ॥ तेषामुपस्थानम्—यदेव सायं प्रातराहवनीयमुप च तिष्ठते उप चास्ते तदेव तस्योपस्थानम् ॥ १ ॥ अथ यदेव प्रतिपरेत्य गार्हपत्यमास्ते वा शेते वा तदेव तस्योपस्थानम् ॥ २ ॥ अथ यत्रैव सं व्रजन्नन्वाहार्य्यपचनमुपस्मरेत् तदेव तं मनसोपतिष्ठेत तदेव तस्योपस्थानम् ॥ ३ ॥ अथ प्रातरनशित्वा मुहूर्तं सभाया-

मासित्वाऽपि कामं पल्ययेत तदेव तस्योपस्थानम् ॥ ४ ॥ अथ यत्रैव भस्मोद्धृतमुपनिगच्छेत् तदेव तस्योपस्थानम् ॥ ५ ॥ एवमुहास्यैता देवता उपस्थिता भवन्ति ॥ ३ ॥

६—यः कामयेत—"यथेमा रुद्रः प्रजा अश्रद्धयेव त्वत्, महसेव त्वत् निघातमिव त्वत् सचते, एवमन्नमद्यामिति ॥" तर्हि ह स जुहुयाद् यत्रैतत् प्रथमं समिद्धो भवति ॥ १ ॥ अथ यः कामयेत—यथेमा वरुणः प्रजा गृह्णन्निव त्वत् सहमेव त्वत्, निघातमिव त्वत् सचते, एवमन्नमद्यामिति ।" तर्हि ह स जुहुयाद् यत्रैतत्प्रदीप्ततरो भवति ॥ २ ॥ अथ यः कामयेत इन्द्र इव श्रिया यशसा स्यामिति तर्हि ह स जुहुयाद्—यत्रैतत् प्रदीप्तो भवति उच्चैर्धूमः परमया जूत्या बल्बलीति ॥३॥ अथ यः कामयेत—"मैत्रेणोदन्नमद्यामिति ।" यमाहुः सर्वस्य वा अयं ब्राह्मणो मित्रं न वा अयं कंचन हिनस्तीति ।" तर्हि ह स जुहुयाद्—यत्रैतत् प्रतितरामिव तिरश्चीवार्चिः संशाम्यतो भवति ॥ ४ ॥ अथ यः कामयेत—ब्रह्मवर्चसी स्यामिति । तर्हि ह स जुहुयाद्—यत्रैतदङ्गाराश्चाकश्यन्त इव ॥ ५ ॥ एतेषामेकं संवत्सरमुपेत्सेत् स्वयं जुह्वद्, यदि वास्यान्यो जुहुयात् ॥ ६ ॥ अथ योऽन्यथान्यथा जुहोति स सामि निवर्तेत । अथ यः सार्द्धं जुहोति तत् क्षिप्रेऽभितृन्द्यात् ॥ ७ ॥ तत्र साग्न्युद्वासयेत् ॥ ८ ॥

७—स वा उपवत्या प्रतिपद्यते—"उप प्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वन्तः" ॥ १ ॥ अग्निर्मूर्द्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति" ॥ २ ॥ अथेन्द्राग्नी ॥ ' उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै ॥ उभा दातारविषां रयीणामुभा वाजस्य सातये हुवे वाम्"—इति ॥ "अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्द्धया रयिम्" ॥ ४ ॥ "अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ॥ यमप्रवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे"—इति ॥ ५ ॥ "अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे, अह्रयः । पयः सहस्रसामृषिम्" ॥ ६ ॥ तदेतत्समाहार्य्यं षड्ऋचम् । स वै त्रिः प्रथमां जपति त्रिरुत्तमाम् ॥ ७ ॥ यद्ध वा अत्राग्निहोत्रं जुह्वद् वाचा न वा कर्मणा वा मिथ्या करोति—आत्मनस्तदवद्यति, आयुषो वा वर्चसो वा, प्रजायै वा । तदु खलु पुनराप्याययितवै यजूंषि जपति ॥ चित्रावसो स्वस्ति ते पारमशीयेति त्रिरेतज्जपति ॥ एतावन्न् तिष्ठन् जपति ॥ ८ ॥

## १—आसीनोपस्थानम् ।

८—अथासीन उपतिष्ठते ॥ १ ॥ अथ गामभ्यैति ॥ अथ गामभिस्पृशति ॥ २ ॥

अथ गार्हपत्यमभ्यैति, स गार्हपत्यमुपतिष्ठते ॥ ३ ॥ अथ गामभ्यैति ॥ ४ ॥ अथान्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नग्निमीक्षमाणो जपति तिस्रो बार्हस्पत्यास्तिस्रस्त्रिदेवत्या ऐन्द्री सावित्र्याग्नेयीश्चेति ॥ त्रिरेतज्जपति। अथ पुत्रस्य नाम गृह्णाति—"इदं मेऽयं वीर्य्यं पुत्रोऽनुसंतनवद्" इति ॥ यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात् ॥ ५ ॥ इति तु बृहदुपस्थाम ॥

## २ – क्षुल्लकोपस्थानम्।

९—अथ हुतेऽग्निहोत्रे उपतिष्ठते—"भूर्भुवःस्वःसु प्रजाः प्रजाभिः स्याम, सुवीरो वीरैः सुपोषः पोषैः"—इति। एतेनैवोपतिष्ठेत, एतेन न्वेव वयमुपचराम इति ह स्माह्यासुरिः ॥ १ ॥ इति तु चुल्लकोपस्थानम ॥

## ३—प्रवत्स्यदुपस्थानम्।

१०—अथ प्रवत्स्यन् गार्हपत्यमेवाग्रे उपतिष्ठतेऽथाहवनीयम ॥ १ ॥ अथ प्र वा व्रजति प्र वा धावयति स यत्र वेलां मन्यते तत् स्यन्त्वा वाचं विसृजते ॥ २ ॥ अथ प्रोष्य परेत्य यत्र वेलां मन्यते तद्वाचं यच्छति, स यद्यपि राजान्तरेण स्यान्नैव तमुपयात् ॥ स आहवनीयमेवाग्रे उपतिष्ठते, अथ गार्हपत्यम् ॥ ३ ॥ अथोपविश्य तृणान्यपलुम्पति। एतन्नजपेत ॥ ४ ॥ स वै खलु तूष्णीमेवाहवनीयमुपतिष्ठते, तूष्णीमुपविश्य तृणान्यपलुम्पति। तूष्णीमेव गार्हपत्यमुपतिष्ठते, तूष्णीमुपविश्य तृणान्यपलुम्पति ॥ ५ ॥ अथातो ब्रह्मणामेवोपचारः ॥ स यदिहापि सुक्रुद्ध इव स्यात् स एव ततस्तत् कुर्य्यात्, यद्वदिष्यन् वा करिष्यन् वा स्यात् ॥ ६ ॥

## ४—अथाग्निहोत्रापचारप्रायश्चित्तिः।

११—दीर्घसत्रं ह वा एत उपयन्ति येऽग्निहोत्रं जुह्वति। एतद्वै जरामर्य्यं सत्रम्। जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा ॥ अथ यदेतस्याग्निहोत्रं जुह्वतोऽन्तरेणाग्नी युक्तं वा वियायात्, सं वा चरेयुः--का तत्र प्रायश्चित्ति रिति। यदि हास्याप्यन्तरेण ग्रामोऽग्नीन् वियायात्, नैव वाचनास्तिरस्ति न रिष्टिरिति हैव विद्यात् ॥ १ ॥ त्रयो ह त्वाव पशवोऽमेध्याः--दुर्वराह ऐडकः, श्वा। तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित् सञ्चरेत तत्र प्रायश्चित्तिं कुर्य्यात्। तद्धैके गार्हपत्याद्भस्मोपहत्याहवनीयान्निवहन्तो यन्ति। तदु तथा न कुर्य्यात्। इत्थमेव कुर्य्यात्--उदस्थालीं वै वोदकमण्डलुं वादाय गार्हपत्यादग्र आहवनीयान्निनयन्नियात् ॥ २ ॥ अथ यस्याग्निहोत्रं दोह्यमानं स्कन्देत तत्र स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयात् ॥ यद्यु नीची स्थाली स्याद्, यदि वा भिद्येत, स्कन्नप्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यदन्यद्विन्देत् तेन

जुहुयात् ॥ अथ यत्र स्कन्नं स्यात् तदभिमृशेत् ॥ अथ यत्रावभिन्नं स्यात् तदुदस्थालीं वै वोदकमण्डलुं वा निनयेत् । तानि कपालानि संचित्य यत्र भस्मोद्धृतं स्यात् तन्निवपेत् ॥ ३ ॥ अथ यस्याग्निहोत्री दोह्यमानोपविशेत् । तां हैके यजुषोत्थापयन्ति, तां तस्यामाहुत्यां ब्राह्मणाय दद्याद् यमनभ्यागमिष्यन् मन्येत् । तदुहोवाच याज्ञवल्क्यः—दण्डेनैवैनां विपिष्योत्थापयेदिति ॥ ४ ॥ अथ यस्याग्निहोत्री दोह्यमाना वाश्येत स स्तम्बमाच्छिद्य ग्रासयेत् ॥ ५ ॥ अथ यस्याग्निहोत्री लोहितं दुहीत स व्युत्क्रामतेत्युक्त्वा मेक्षणं कृत्वाऽन्वाहार्यपचनं परिश्रयितवै ब्रूयात् । तस्मिन्नेतच्छ्रपयित्वा तस्मिंस्तूष्णीं जुहुयात् ॥ तां तस्यामाहुत्यां ब्राह्मणाय दद्याद् यमनभ्यागमिष्यन् मन्येत अथ यदन्यद्विन्देत् तेन जुहुयात् ॥ ६ ॥ अथ यस्याग्निहोत्रं दोह्यमानममेध्यमापद्येत स गार्हपत्यादुष्णं भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीं निनयेद् अद्भिरुपनिनयति । अथ यदन्यद्विन्देत् तेन जुहुयात् ॥ ७ ॥ अथ यस्य दोहितममेध्यमापद्येत स य एवैतेऽङ्गारा निरूढा येष्वधिश्रयिष्यन् भवति तान् प्रत्युह्य तस्मिन्नेन दुष्णे भस्मंस्तूष्णीं निनयेत्, अद्भिरुपनिनयति । अथ यदन्यद्विन्देत्तेन जुहुयात् ॥ ८ ॥ अथयस्याग्निहोत्रमधिश्रितममेध्यमापद्येत स येष्वेधिश्रितं भवति तेष्वेवाङ्गारेष्वेनत्तूष्णीं जुहुयात् । अद्भिरुपनिनयति । अथ यदन्यद्विन्देत्तेन जुहुयात् ॥ ९ ॥ अथ यदधिश्रितेऽग्निहोत्रे यजमानो म्रियेत तदेवैनदभिपर्य्यावाय विस्पन्दयेत् ॥ १० ॥ अथ यस्याग्निहोत्रे स्रुच्युन्नीतं स्कन्देत् स स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परि शिष्टेन जुहुयात् । यद्यु नीचो स्रुक् स्याद् यदि वा भिद्येत. स्कन्नप्रायश्चितेनैवाभिमृश्याद्भिरुपनिनीय यत् स्थाल्यां परिशिष्टं स्यात्तेन जुहुयात् ॥ तद्धैके प्रतिपरेत्य यत् स्थाल्यां परिशिष्टं तेन जुह्वति तदु तथा न कुर्य्यात् । तदेवोपविशेत् । यत् स्थाल्यां परिशिष्टं स्यात् तदस्मा उन्नीयाहरेयुः । यद्यु तत्र न स्यात्, यदन्यद्विन्देत तदग्नावधिश्रित्यावज्योत्याप: प्रत्यानीयोद्वास्य तदसो हैवोन्नेष्यामीत्युक्तं भवति । अथात्र यथोन्नीतमेव स्मा उन्नीयाहरेयुः तेन कामं जुहुयात् ॥ ११ ॥ अथ यस्याग्निहोत्रं स्रुच्युन्नीतममेध्यमापद्येत स आहवनीये समिधमभ्याधायाहवनीयादेवोष्णं भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मंस्तूष्णीं निनयेत् । अद्भिरुपनिनयति । अथ यदन्यद्विन्देत्तेन जुहुयात् ॥ १२ ॥ अथ यस्याग्निहोत्रं स्रुच्युन्नीतमुपरिष्टादववर्षेत् तद्विद्याच्छ्रियान् भविष्यामीति, तेन कामं जुहुयात् ॥ १३ ॥ अथ यत्पूर्वस्यामाहुत्यां हुतायामथाग्निरनुगच्छेत् तद्यं प्रतिवेशं शकलं विन्देत्तमभ्यस्याभिजुहुयात् । यद्यु अस्य हृदय व्येव लिखेद्—हिरण्यमभिजुहुयात् ॥ १४ अथ यस्याहवनीय उद्धृतः पुराग्निहोत्रादनुगच्छेत्स गार्हपत्यादेवैनं प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रं जुहुयात् स यद्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेदेवमेव कुर्य्यात् ॥ १५ ॥

यस्य गार्हपत्योऽनुगच्छेत् स उल्मुकादङ्गारमादाय तमरण्योरभिविमथ्नीयात् ॥ १६ ॥ अथ यस्याग्नावग्निमभ्युद्धरेयुः—ईश्वरौ वा एतौ सम्पद्याशान्तौ यजमानस्य प्रजां च पशूंश्च निर्दहतः । तदभिमन्त्रयेत —

"समितं सङ्कल्पेथां सं प्रिया रोचिष्णू सुमनस्यमानौ इषमूर्जमभिसंवसानौ, सं वां मनांसि सं व्रता समु चित्तान्याकरम्, अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि"—इति ॥ यद्यु अस्य हृदयं व्येव लिखेत् अग्नयेऽग्निमतेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत्—सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये—"अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्य" इत्यनुवाक्या । "त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता सखा समिध्यसे"—इति याज्या ॥ १७ ॥ अथ यस्याहवनीयेऽननुमते गार्हपत्योऽनुगच्छेत् सोऽरण्योरग्नी समारोह्योदङ्ङुदवसाय निर्मथ्य जुहुद्वसेत् । अथ प्रातर्भस्मान्युद्धृत्य गोमयेनालिप्यारण्योरेवाग्नी समारोह्य प्रत्यवस्यति, मथित्वा गार्हपत्यमुद्धृत्याहवनीयमाहृत्यान्वाहार्य्यपचनमग्नये पथिकृतेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये—'वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा, अग्ने यज्ञेषु सुक्रतो'—इत्यनुवाक्या । "देवानामपि पन्थामगन्म यच्छक्नवाम तदनुप्रवोढुम् । अग्निर्विद्वांत्स यजात्सेदु होतासो, अध्वरान्त्स क्रतून् कल्पयाति"—इति याज्या ॥ १८ ॥ अथ यस्याग्नयः संसृज्येरन् स यदि परस्ताद्दहन्नभीयात् तद्विद्यात्—श्रेयान् भविष्यामीति । यद्यु अस्य हृदयं व्येव लिखेत्—अग्नये विविचयेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् । वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये— 'वि ते विष्वग् वातजूतासो अग्ने, भामास शुचे शुचयश्चरन्ति । तुविम्रक्षासो दिव्या नवग्वा वनावनन्ति धृषता रुजन्तः"—इत्यनुवाक्या । "त्वामग्ने मानुषीरीडते विशो होत्राविदं विविचं रत्नधातमम् गुहासन्तं सुभग विश्वदर्शतं तुविष्वणसं सुयजं घृतश्रियम्"—इति याज्या ॥ १९ ॥ यद्ययमितो दहन्नभीयात् तद्विद्यात्—श्रेयान् भविष्यामीति । यद्यु अस्य हृदयं व्येव लिखेत्—अग्नये संवर्गाष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् । ता एव सप्तदश सामिधेनीरनुब्रूयात् वार्त्रघ्नावाज्यभागौ । विराजौ संयाज्ये । अथैते याज्यानुवाक्ये—"परस्या अधिसंवतोऽवराँ २॥ अभ्यातर, यत्राहमस्मिताँ २॥ अव"—इत्यनुवाक्या । "मानो अस्मिन्महाधने परावर्भारभृद् यथा संवर्गं संरयिं जय"—इति याज्या ॥२०॥ यस्य वैद्युतो दहेत् तद्विद्यात्—श्रेयान् भविष्यामीति । यद्यु अस्य हृदयं व्येव लिखेत्—अग्नयेऽप्सुमतेऽष्टाकपालं पुरोडाशं निर्वपेत् । तस्यावृत् प्राग्वत् । "अप्स्वग्ने सधिष्टवसौषधीरनुरुध्यसे, गर्भे सन् जायसे पुनः"—इत्यनुवाक्या ।

"गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्, गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि"-इति याज्या ॥ २१ ॥ अथ अस्याग्नयोऽमेध्यैरग्निभिः संसृजेरन् सोऽग्नये शुचयेऽष्टाकपालं पुरोडाशं निर्वपेत् ॥ तस्यावृत् प्राग्वत ॥ "अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचेत आहुतः"—इति अनुवाक्या । "उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते, तव ज्योतींष्यर्चयः"-इति याज्या ॥ २२ ॥ अथ यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियात् स हरितं हिरण्यं दर्भे प्रबध्य पश्चाद्धर्तवै ब्रूयात् । अथेध्ममादीप्य प्राञ्चं हर्तवै ब्रूयात् । ब्राह्मण आर्षेय उद्धरेत् । तमुपसमाधाय प्रतिपरेत्य गार्हपत्ये आज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यं गृहीत्वा समिधमुपसंगृह्य प्राङुदाद्रवति । अथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति ॥ २३ ॥ अथ यस्याहवनीयमनुद्धृतमादित्योऽभ्युदियात् स रजतं हिरण्यं दर्भे प्रबध्य पुरस्ताद्धर्तवै ब्रूयात् । अथेध्ममादाप्यान्वञ्चं हर्तवै ब्रूयात् । ब्राह्मण आर्षेय उद्धरेत् । तमुपसमाधाय प्रतिपरेत्य गार्हपत्ये आज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य यथागृहीतमाज्यं गृहीत्वा समिधमुपसंगृह्य प्राङुदाद्रवति । अथाहवनीये समिधमभ्याधाय दक्षिणं जान्वाच्य जुहोति ॥२४॥ तदाहुः— यदेष दीर्घसत्री अग्निहोत्रं जुह्वत प्रवसन् म्रियेत जुहुयुरस्मा ३ इ, ना ३—इति । निवान्यवत्सामेष्टवै ब्रूयात्, तस्यै पयसा जुहुयात् । आर्तं वा एतत्पयो यन्निवान्यवत्सायाः । आर्तमेतदग्निहोत्रं यन्मृतस्य । तदार्तेनैव तदार्तं निष्कृत्य श्रेयान् भवति ॥ तस्य वा एतस्याग्निहोत्रस्योपचारः । प्राचीनावीती दोहयति । यज्ञोपवीती वै देवेभ्यो दोहयति – अथैवं पितृणाम् ॥ नाङ्गारेष्वधिश्रयति । यद्धाङ्गारेष्वधिश्रयेद्देवत्रा कुर्यात् ॥ गार्हपत्यादुष्णं भस्म दक्षिणानिरुह्य तस्मिन्नेतदधिश्रयति पितृदैवत्यमेवैतत्तत्करोति । नावज्योतयति, नापः प्रत्यानयति, न त्रिः प्रतिष्ठापं हरति, सकृदेव निकर्षन् हरति, नोन्नेष्यामीत्याह । न चतुरुन्नयति । सकृदेव तूष्णीं न्यक् पर्य्यस्यति । नोपरिष्टात् समिधमभ्यस्य हरति, अधस्तादुपास्य हरति । नोत्तरेण गार्हपत्यमेति । दक्षिणेन गार्हपत्यमेति । अथ यान्यमून्युदीचीनाग्राणि तृणानि भवन्ति दक्षिणाग्राणि तानि करोति । अथाहवनीये समिधमभ्याधाय सव्यं जान्वाच्य सकृदेव तूष्णीं न्यक् पर्य्यस्यति । नोदिङ्गयति, नोपमृष्टेन प्राश्नाति । नोदुक्षति । पितृदैवत्यमेवैतत् तदिदं सर्वं करोति । देवत्राह कुर्य्याद्—यदितरथा कुर्य्यात् ॥ २५ ॥ तदाहुः—यदेष दीर्घसत्र्यग्निहोत्रं जुह्वत प्रवसन्म्रियेत् कथमेतमग्निभिः कुर्य्युरिति । तं हैके दग्ध्वाऽऽहरन्ति तमाहृतमग्निभिः संप्रापयन्ति तदु तथा न कुर्य्यात् ॥ अथीन्धेतान्याहृत्य कृष्णाजिने न्युप्य पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य्य तमग्निभिः समुपोषेत् । तदेनं स्वाद् योनेः प्रजनयतीति ॥ तं हैके ग्रामाग्निना दहन्ति अथ हैके प्रदव्येन, अथ हैक उल्मुक्येन, अथ हैकेऽन्तरेणाग्नींश्चितिं चित्वा तमग्निभिः समुपोषन्ति ॥ तदु तथा न कुर्य्यात् ॥२६॥

अथ ह स्माह नाको मौद्गल्यः मरिष्यन्तं चेद् यजमानं मन्येत, यत्रैवास्मा अशसनं जोषितं स्यात् तदरण्योरग्नी समारोह्य निर्मथ्य जुह्वद्वसेत्। स यदाऽस्माल्लोकाद् यजमानः प्रेयात्—अथैतमन्तरेणाग्नींश्चितिं चित्वा तमग्निभिः समुपोषेदिति। तदु तथा न कुर्य्यात्॥ तिस्र एव स्थालीरेष्टका ब्रूयात्। तासु गोमयानि च शुम्बलानि चावधाय नाना त्रिष्वग्निषु प्रवृञ्ज्यात्। ते ये ततः संतापादग्नयो जायेरंस्तैरेनं दहेयुः॥ तथाहृतैरेव दग्धो भवति नो प्रत्यक्षमिव॥ अथैनं विपुरीषं कृत्वा अस्यां पुरीषं प्रतिष्ठापयति। तमन्तरतः प्रक्षाल्याज्येनान्वनक्ति। अथास्य सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान् प्रत्यस्यति। अथैनमन्तरेणाग्नींश्चितिं चित्वा कृष्णाजिनमुत्तरलोम प्राचीनग्रीवं प्रस्तीर्य्य तस्मिन्नेनमुत्तानं निपाद्य जुहूं घृतेन पूर्णां दक्षिणे पाणावादधाति सव्य उपभृतम्, उरसि ध्रुवाम्, मुखेऽग्निहोत्रहवणीम्, नासिकयोः स्रुवौ, कर्णयोः प्राशित्रहरणे शीर्षे चमसं प्रणीता प्रयणयनम्, पार्श्वयोः शूर्पे, उदरे पात्रीं समवत्तधानीं पृषदाज्यवतीं, शिश्नस्यान्ते शम्याम्, आण्डयोरन्ते वृषारवावन्वगुलूखलं च मुसलं च, अन्तरेणोरू अन्यानि यज्ञपात्राणि, दक्षिणे पाणौ स्फ्यम्॥ तं यदि गार्हपत्यः पूर्वः प्राप्नुयात्, तद्विद्यात्—प्रतिष्ठ एनमग्निः पूर्वः प्रापत्, प्रतिष्ठास्यति॥ अथ यद्याहवनीयः तद्विद्यात्—मुख्य एनमग्निः पूर्वः प्रापत्, मुखतो लोकानजैषीत्॥ अथ यद्यन्वाहार्य्यपचनः, तद्विद्यात्—अन्नाद एनमग्निः पूर्वः प्रापत्, अन्नमत्स्यति॥ अथ यदि सर्वे सकृत्, तद्विद्यात कल्याणं लोकमजैषीदिति॥ एतान्यस्मिन् विज्ञानानि॥ तां वा एतां यजमानास्माहुतिमन्ततो जुहोति॥ अथ यान्यश्ममयानि च मृन्मयानि च भवन्ति तानि ब्राह्मणाय दद्यात्। शवोद्वहमुह तं मन्यन्ते यस्तानि प्रतिगृह्णाति। अप एवैनान्यभ्यवहरेयुः॥ अथैतामाहुतिं जुहोति पुत्रो वा भ्राता वा यो वाऽन्यो ब्राह्मणः स्यात्॥ "अस्मात् त्वमधिजातोऽसि त्वदयं जायतां पुनः। असौ स्वर्गाय लोकाय स्वाहा"—इति॥ अनपेक्षमेत्याप उपस्पृशन्ति॥ २७॥ सैषाग्निहोत्रस्यापचारे प्रायश्चित्तिः॥

एतन्न्वग्निहोत्रं द्वितीया यज्ञसंस्था॥ २॥

---

# २—अथ दर्शपूर्णमासस्य—

## १—बहिरङ्गकर्माधिकारः ।

### १ – तद्वै व्रतोपायनम् ।

अन्तरेणाहवनीयं च गार्हपत्यं च प्राङ्तिष्ठन्नप उपस्पृशति ॥ १ ॥ सोऽग्नीमेवाभीक्षमाणोव्रतमुपैति । स वै सत्यमेव वदेत् ॥ २ ॥ स वा आरण्यमेवाश्नीयात् ॥ ३ ॥ स आहवनीयागारे वैतां रात्रिं शयीत, गार्हपत्यगारे वा । अधः शयीत ॥ ४ ॥

### २—अपां प्रणयनं ३—पात्रासादनञ्च ।

स वै प्रातरप एव प्रथमेन कर्मणाऽभिपद्यते—अपः प्रणयति । ता उत्सिच्योत्तरेण गार्हपत्यं सादयति । ता उत्तरेणाहवनीयं प्रणयति । ता नान्तरेण सञ्चरेयुः । ता नातिहृत्य सादयेन्नो अनाप्तः सादयेत्, संप्रत्येवोत्तरेणाहवनीयं प्रणयति ॥ १ ॥ अथ तृणैः परिस्तृणाति ॥ २ ॥ द्वन्द्वं पात्राण्युदाहरति—शूर्पं चाग्निहोत्रहवणीं च;—स्फ्यं च कपालानिच; शम्या च कृष्णाजिनं च;—उलूखलमुसले; दृषदुपले ॥ ३ ॥

### ४—वाग् यमनम् ५ —हविर्ग्रहणञ्च ।

अथ वाचं यच्छति ॥ ४ ॥ अथ प्रतपति ॥ ५ ॥ अथ प्रैति । स वा अनस एव गृह्णीयात् । भूमायै ह स्मर्षयो गृह्णन्ति, उतो पात्र्यै गृह्णन्ति ॥१॥ स धुरमभिमृशति ॥२॥ अथ जघनेन कस्तम्भीमीषामभिमृश्य जपति ॥ ३ ॥ अथाक्रमते ॥ ४ ॥ अथ प्रेक्षते ॥ ५ ॥ अथापास्यति ॥ ६ ॥ अथाभिपद्यते ॥ ७ ॥ अथ गृह्णाति ॥ ८ ॥ अथ देवताया आदिशति ॥ ९ ॥ एवमेव यथा पूर्वं हवींषि गृहीत्वाऽथाभिमृशति ॥ १० ॥ अथ प्राङ् प्रेक्षते ॥ ११ ॥ अथावरोहति ॥ १२ ॥ अथ प्रैति ॥ १३ ॥ स यस्य गार्हपत्ये हवींषि श्रपयन्ति—गार्हपत्येतस्य पात्राणि संसादयन्ति, जघनेनोतर्हि गार्हपत्यं सादयेत् ॥ १४ ॥ यस्याहवनीये हवींषि श्रपयन्ति—आहवनीये तस्य पात्राणि संसादयन्ति जघनेनोतर्ह्याहवनीयं सादयेत् ॥ १५ ॥

### ६—यज्ञियप्रोक्षणम् ।

पवित्रे करोति । ते द्वे भवतः—अथो अपि त्रीणि स्युः ॥ १ ॥ स उत्पुनाति ॥ २ ॥

ताः सव्ये पाणौ कृत्वा दक्षिणेनोदिङ्गयति ॥ ३ ॥ अथ हविः प्रोक्षति । एवमेव यथापूर्वं हवींषि प्रोक्ष्य, अथ यज्ञपात्राणि प्रोक्षति ॥ ४ ॥

## ७—पुरोडाशकरणम् ( हविःश्रृतिः )

अथ कृष्णाजिनमादत्ते । तदवधूनोति । तत् प्रतीचीनग्रीवमुपस्तृणाति ॥ १ ॥ अभिनिहितमेव सव्येन पाणिना भवति—अथ दक्षिणेनोलूखलमाहरति । अथोलूखलं निदधाति ॥ २ ॥ अथ हविरावपति ॥ ३ ॥ अत्र वाचं विसृजते ॥ ४ ॥ मुसलमादत्ते ॥ ५ ॥ हविष्कृतमुद्वादयति । तद्धस्मैतत्पुरा जायैव हविष्कृदुपोत्तिष्ठति । तदिदमप्येतर्हि य एव कश्चोपोत्तिष्ठति । स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति ॥ ६ ॥ अथ शूर्पमादत्ते । अथ हविर्निर्वपति, अथ निष्पुनाति । अथापविविनक्ति ॥ ७ ॥ अथानुमन्त्रयते ॥ ८ ॥ अथ त्रिः फलीकरोति ॥ ९ ॥

स वै कपालान्येवान्यतर उपदधाति दृषदुपले अन्यतरः । तद्वा एतदुभयं सह क्रियते ॥ १ ॥ स यः कपालान्युपदधाति स उपवेषमादत्ते । तेन प्राचोऽङ्गारानुदूहति । अथाङ्गारमास्कौति । तं मध्येन कपालेनाभ्युपदधाति ॥ २ ॥ अथाभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति । अथाङ्गारमास्कौति । अथाङ्गारमध्यूहति । अथ यत्पश्चात् तदुपदधाति । अथ यत् पुरस्तात् तदुपदधाति । अथ यद्दक्षिणतस्तदुपदधाति । तूष्णीं वै वेतराणि कपालान्युपदधाति । अथाङ्गारैरभ्यूहति ।

अथ यो दृषदुपले उपदधाति स कृष्णाजिनमादत्ते । तदवधूनोति । तत् प्रतीचीनग्रीवमुपस्तृणाति ॥ १ ॥ अथ दृषदमुपदधाति । अथ शम्यामुदीचीनाग्रामुपदधाति । अथोपलामुपदधाति । अथ हविरधिवपति । अथ पिनष्टि । प्रोक्षति ॥ २ ॥

पिंषन्ति पिष्टान्यभीन्धन्ते कपालानि । अथैक आज्यं निर्वपति ॥ १ ॥ पवित्रवति, संवपति, पात्र्यां पवित्रे अवधाय ॥ २ ॥ अथान्तर्वेद्युपविशति । अथैक उपसर्जनीभिरेति । ता आनयति । ताः पवित्राभ्यां प्रति गृह्णाति । अथ संयौति । अधिवर्त्यन्नुवै संयौति ॥ ३ ॥ अथ द्वेधा करोति यदि द्वे हविषी भवतः । पौर्णमास्यां वै द्वे हविषी भवतः ॥ ४ ॥ स यत्र पुनर्न सं हरिष्यन् स्यात् तदभिमृशति ॥ ५ ॥

अधिवृणक्त्येवैष पुरोडाशमधिश्रयत्यसावाज्यम् । तद्वा एतदुभयं सह क्रियते ॥ सोऽसावाज्यमधिश्रयति । तत्पुनरुद्वासयति ॥ २ ॥ अथ पुरोडाशमधिवृणक्ति ॥ ३ ॥ तं प्रथयति । तं न सत्रा पृथुं कुर्यात् । अश्वशफमात्रं कुर्यादित्यु हैक आहुः कस्तद्वेद—यावानश्वशफः । यावन्तमेव स्वयं मनसा न सत्रा पृथुं मन्येत—एवं कुर्यात् ॥ ४ ॥ तमद्भिरभिमृशति सकृद्वा त्रिर्वा ॥ ५ ॥ तं पर्य्यग्निं करोति ॥ ६ ॥ तं श्रपयति ॥ ७ ॥ तमभिमृशति ॥ ८ ॥ यदा शृतोऽथाभिवासयति ॥ ९ ॥ अथ पात्रीनिर्णेजनमङ्गलिप्रणेजनमास्येभ्यो निनयति । तन्नाना निनयति । तदभितपति ॥ १० ॥

## ८—वेदिनिर्माणम् वेदिक्लृप्तिः।

स्फ्यमादत्ते। तं सव्ये पाणौ कृत्वा दक्षिणेनाभिमृश्य जपति। अग्नीदुत्तरतः पर्य्येति। अध्वर्य्युरेवेत उपसंरुणद्धि। अस्या एव सर्वं हरति ॥ १ ॥ अथ तृणमन्तर्धाय प्रहरति। अथ द्वितीयं प्रहरति। तमग्नीदभिनिदधाति। अथ तृतीयं प्रहरति। स वै त्रिर्यजुषा हरति। तूष्णीं चतुर्थम् ॥ २ ॥ अङ्गला वेदिः। ( वेदिं छन्दोभिरभितः परिगृह्णाति—गायत्रेण दक्षिणतः, त्रैष्टुभेन पश्चात्, जागतेनोत्तरतः। छन्दोभिरभितः परिगृह्याग्निंपुरस्तान् समाधत्ते। ) तमनुविश्योत्तरेण परिग्रहेण परिगृह्णाति—दक्षिणतः पश्चादुत्तरतः ॥ ३ ॥ स वै त्रिः पूर्वं परिग्रहं परिगृह्णाति त्रिरुत्तरम्। षड्भिर्व्याहृतिभिः पूर्वं परिग्रहं परिगृह्णाति। षड्भिरुत्तरम् ॥ ४ ॥ व्याममात्री पश्चात् स्यादित्याहुः। त्र्यरत्निः प्राची ॥ नात्र मात्रास्ति, यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्य्यात् ॥५॥ अभितोऽग्निमंसा उन्नयति ॥ ६ ॥ सा वै पश्चाद् वरीयसी स्यात्, मध्ये संह्वारिता, पुनः पुरस्तादुर्वी ॥ ७ ॥ सा वै प्राक्प्रवणा स्यात् अथो उदक्प्रवणा। दक्षिणतः पुरीष प्रत्युदूहति ॥ ८ ॥ तां प्रतिमार्ष्टि ॥ ९ ॥

## ९—अथ संभारसंस्काराः।

अथाह 'प्रोक्षणीरादाय' इति। स वा उपर्य्युपर्य्येव प्रोक्षणीषु धार्य्यमाणास्वथ स्फयमुद्यच्छति ॥ १ ॥ अथैतां वाचं वदति—"प्रोक्षणीरासादय,—इध्मं बर्हिरुपसादय, स्रुचः संमृड्ढि, पत्नीं संनह्याज्येनोदेहि"—इति। संप्रैष एवैषः। स यदि कामयेत—ब्रूयादेतत्। यद्यु कामयेत—अपि नाद्रियेत; स्वयमु ह्येवैतद्वेद—इदमतः कर्म्म कर्तव्यमिति ॥ २ ॥

अथोदञ्चं स्फ्यं प्रहरति ॥ १ ॥ अथ पाणी अवनेनिक्ते ॥ २ ॥ अनवमर्शमेवयजेत। स यदि पुरा बर्हिषः स्तरणात् किञ्चिदापद्येत बहिरेव तत् स्तृणन्नपास्येत् अथ यदा बर्हिस्तृणन्ति—अपि यदाऽभितिष्ठन्ति ॥ ३ ॥

स वै स्रुचः संमार्ष्टि—अद्भिश्च ब्रह्मणा च। आपो हि कुशाः। ब्रह्म यजुः ॥ १ ॥ अथ स्रुवमादत्ते, तं प्रतपति ॥ २ ॥ स वा इत्यग्रैरन्तरतः संमार्ष्टि मूलैर्बाह्यतः ॥ ३ ॥ तूष्णीं प्राशित्रहरणम् ॥ ४ ॥ स वै संमृज्य संमृज्य प्रतप्य प्रतप्य प्रयच्छति ॥ ५ ॥ स वै स्रुवमेवाग्रे संमार्ष्टि—अथेतराः स्रुचः। स वै तथैव संमृज्याद् यथाग्निं नाभिव्युक्षेत्। प्राङ्क्विवोत्क्रम्य ॥ ६ ॥

अथ पत्नीं संनह्यति योक्त्रेण। स वा अभिवासः संनह्यति। स वै न ग्रन्थिं कुर्य्यात्। ऊर्ध्वमेवोद्गूहति ॥ १ ॥ सा वै न पश्चात् प्राची देवानां यज्ञमन्वासीत, दक्षिणत इवैवान्वासीत ॥ २ ॥ अथाज्यमवेक्षते ॥ ३ ॥

अथाज्यमादायप्राङुदाहरति। तदाहवनीयेऽधिश्रयति। यस्याहवनीये हवींषि श्रपयन्ति स सार्द्धमेव विलाप्य प्रागुदाहरत्यवकाश्य पत्नीम्। यस्यो पत्नी न भवति, अग्र एव तस्याहवनीयेऽधिश्रयति तत्तत आदत्ते। तदन्तर्वेद्यासादयति॥ १॥ प्रोक्षणीषु पवित्रे भवतः। ते तत आदत्ते। ताभ्यामाज्यमुत्पुनाति॥ २॥ अथाज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति॥ ३॥ अथाज्यमवेक्षतेऽध्वर्युः॥ ४॥

स वा आजस्य चतुर्जुह्वां गृह्णाति—अष्टौ कृत्वा उपभृति—चतुर्ध्रुवायां गृह्णाति॥ १॥ स यज्जुह्वां गृह्णाति जुह्वैव तज्जुहोति। यदुपभृति गृह्णाति जुह्वैव तज्जुहोति॥ २॥ स यजुषा सकृज्जुह्वां गृह्णाति त्रिस्तूष्णीम्॥ यजुषा सकृदुपभृति गृह्णाति सप्तकृत्वस्तूष्णीम्। यजुषा सकृद्ध्रुवायां गृह्णाति त्रिस्तूष्णीम्॥ ३॥

प्रोक्षणीरध्वर्य्युरादत्ते। स इध्ममेवाग्रे प्रोक्षति। अथ वेदिं प्रोक्षति। अथास्मै बर्हिः प्रयच्छति। तत् पुरस्ताद् ग्रन्थ्यासादयति। तत् प्रोक्षति। अथ याः प्रोक्षण्यः परिशिष्यन्ते ताभिरोषधीनां मूलान्युपनिनयति॥ १॥

अथ विस्रंस्य ग्रन्थिं पुरस्तात् प्रस्तरं गृह्णाति॥ १॥ अथ सनहनं विस्रंसयति। तद्दक्षिणायां श्रोणौ निदधाति। तत्पुनरभिच्छादयति॥ २॥ अथ बर्हिस्तृणाति। तद्वै बहुलं स्तृणीयादित्याहुः। तद्वै तदाहर्तर्य्यवाधि त्रिवृत् स्तृणाति। अथो अपि प्रबर्हं स्तृणीयात्। अधरमूलं स्तृणाति।

## १०—अथाग्निक्लृप्तिः।

अथाग्निं कल्पयति। उपर्य्युपरि प्रस्तरं धारयन् कल्पयति॥ ४॥ अथ परिधीन् परिदधाति॥ ५॥ स यदग्नौ जुह्वति तदेनानवति, अथ यदेनानुपर्य्युपरि जुह्वति तदेनानवति। अथ यद् बर्हिष्यरिधिस्कन्दति तदेतेषु हुतं। तस्मादुह नाग इव स्कन्नं स्यादिमां वैते प्राविशन्। स स्कन्नमभिमृशति॥ ६॥ तद्धैके—इध्मस्यैवैतान् परिधीन् परिदधति। तदु तथा न कुर्य्यात्। अभ्याधानापह्यवेष्मः क्रियते। अन्यानेवाहरेयुः॥ ७॥ ते वै पालाशाः स्युः। यदि पालाशान्न विन्देत् अथो अपि वैकङ्कताः स्युः। यदि वैकङ्कतान्न विन्देद् अथो अपि काष्मर्य्यमयाः स्युः। यदि काष्मर्य्यमयान्न विन्देत्—अथो अपि बैल्वाः स्युः। अथो खादिराः। अथो औदुम्बराः। ते हि वृक्षा यज्ञियाः। तस्मादेतेषां वृक्षाणां भवन्ति॥ ८॥ ते वा आर्द्राः स्युः॥ ९॥ स मध्यममेवाग्रे परिधिं परिदधाति। अथ दक्षिणं परिदधाति। अथोत्तरं परिदधाति। अथ समिधमभ्यादधाति। स मध्यममेवाग्रे परिधिमुपस्पृशति तेनैतानग्रे समिन्धे, अथाग्नावभ्यादधाति। तेनो अग्निं प्रत्यक्षं समिन्धे। अथ द्वितीयां समिधमभ्याधाय जपति। अथ तृतीयां समिधमभ्यादधाति अथ स्तीर्णां वेदिमुपावर्तते। स द्वे तृणे आदाय तिरश्ची

निदधाति । ते विधृती नाम । तत् प्रस्तरं स्तृणाति । तमभिमिदधाति । अथ दक्षिणेन जुहूं प्रतिगृह्णाति । अभिनिहित एव सव्येन पाणिना भवति । अथ जुहूं प्रतिगृह्णाति । स वा उपरि जुहूं सादयति । अथ इतराः स्रुचः । सोऽभिमृशति ।

इति बहिरङ्गकर्माधिकारः ॥ १ ॥

## २—अन्तरङ्गगुणकर्माणि ।

अथ पञ्चानुवचनानि । पूर्वोत्तरौ द्वावाघारौ । होतृत्रयम् । प्रयाजयामः । इति चत्वारि अन्तरङ्गाणि गुणकर्माणि । तत्रादौ पंचानुवचनानि यथा—

इन्धे ह वा एतध्वर्युरिध्मेनाग्निं, समिन्धे सामिधेनीभिर्होता ॥ १ ॥ स आह—"अग्नये समिध्यमानायानुब्रूहि"—इति ॥ २ ॥ अथ होता—आग्नेयीर्गायत्रीरेकादशान्वाह । स वै त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । ताः पञ्चदश सामिधेन्यः संपद्यन्ते ॥ (एतास्वनूच्यमानासु यं द्विष्यात् तमङ्गुष्ठाभ्यामवबाधेत—"इदमहममुमवबाधे" इति ॥ २ ॥ ) त्रिरेव प्रथमां त्रिरुत्तमामनवानन्ननुब्रूयात् । स यावदस्य वशः स्यादेवमेवानुविवक्षेत् । स यद्येतन्नोदाशंसेत—अप्येकैकामेवानवानन्ननुब्रूयात् ॥ ३ ॥ ता वै सन्तता अव्यवच्छिन्ना अन्वाह ॥ ४ ॥ हिंकृत्यान्वाह । स वा उपांशु हिंकरोति ।

### १—अनुवचनानि ।

(१) स वा राति च प्रेतिचान्वाह—

१—प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या । देवाञ्जिगाति सुम्नयुः । ३

२—अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि । १

३—तं त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचा यविष्ठ्य । १

४—स नः पृथुश्रवाय्यमच्छादेव विवाससि । बृहदग्ने सुवीर्य्यम् । १

५—ईडेन्यो नमस्यस्तिरस्तमांसि दर्शत् । समग्निरिध्यते वृषा । १

६—वृषो अग्निः समिध्यत अश्वो न देव वाहनः । तं हविष्मन्त ईडते । १

७—वृषणं त्वा वयं वृषन् वृषणः समिधिमहि । अग्नेर्दीद्यतं बृहत् । १

८—अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् । १

९—समिध्यमानो अध्वर अग्निः पावक ईड्यः । शोचिष्केशस्तमीमहे । १

१०—समिद्धो अग्न आहुत देवान् यक्षि स्वध्वर । त्वं हि हव्यवाडसि । १

११—आ जुहोता दुवस्यताग्निं प्रयत्यध्वरे । वृणीध्वं हव्यवाहनम् ।" ॥ ३ ॥

॥ इति सामिधेन्यमन्त्रा एकादश ॥

(२) "अग्ने महाँ असि ब्राह्मण भारत"—इति उपस्तवनमन्त्रः ॥

(३) अथार्षेयं प्रवृणीते । परस्तादर्वाक् प्रवृणीते ॥ ३ ॥ इति आर्षेयप्रवरणम् ।

(४) स आर्षेयमुक्त्वाह—

"देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः । प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाड् । आस्पात्रं जुहूर्देवानाम् चमसो देवपानः । अराँ २ इवाग्ने नेमिर्देवांस्त्वं परिभूरसि" इतिनिवित् ॥ ४ ॥

(५) अथ देवानावाहयति—

१—"आवह देवान् यजमानाय"— इति तस्मै यज्ञाय देवानावोढवा आह ।

२—अग्निमग्नआवह—इति तदाग्नेयायाज्यभागायाग्निमावोढवा आह ।

३—सोममावह—इति तत्सौम्यायाज्यभागाय सोममावोढवा आह ।

४—अग्निमावह—इति तद्य एष उभयत्राच्युत् आग्नेयः पुरोडाशो भवति तस्मा अग्निमावोढवा आह ।

७—अथ यथादेवतम्—

८—देवाँ २॥ आज्यपाँ २॥ आवह"—इति तत् प्रयाजानुयाजानावोढवा आह ।

९—अग्निं होत्रायावह"—इति तदग्निं होत्रायावोढवा आह ।

१०—स्वं महिमानमावह'—इति तद्वाचमावोढवा आह ।

११—आ च वह जातवेदः, सुयजा च यज'—इति तद्या एवैतद्देवता आवोढवा आह ता एवैतदाह ॥ ५ ॥ इत्यावाहनम् ॥

स वै तिष्ठन्नन्वाह । आसीनो याज्यां यजति ॥ ६ ॥

## २—अथ पूर्वोत्तराघारौ ।

स स्रुवेण पूर्वमाघारमाघार्य्याह—"अग्निमग्नीन् संमृड्ढि"—इति ॥ १ ॥ अथ परिक्रामन् त्रिस्त्रिः संमार्ष्टि । अथोपरिष्टात् तूष्णीं त्रिः ॥ २ ॥ स स्रुचोत्तरमाघारमाघारयिष्यन् पूर्वेण स्रुचावञ्जलिं निदधाति ॥ ३ ॥ स्रुचावादत्ते ॥ ४ ॥ ( अथाग्नेर्दक्षिणार्द्धे प्रज्वलत्यग्नौ ऋजुं दीर्घं सन्ततमाघारमाघारयति ॥ ५ ॥ ) अथ संस्पर्शयन् स्रुचौ पर्य्येत्य ध्रुवया समनक्ति ॥ ६ ॥

## ३—अथ होतृत्रयप्रवरणम् ।

स वै प्रवरायाश्रावयति । स इध्मसंनहनान्येवाभिपद्याश्रावयति ॥ १ ॥ स आश्राव्य य एव देवानां होता तमेवाग्रे प्रवृणीते । स आह—"अग्निर्देवो दैव्यो होता, देवान् यक्षद् विद्वांश्चिकित्वान् मनुष्वद् भरतवत्"—इति ॥ २ ॥ अथार्षेयं प्रवृणीते परस्तादर्वाक् प्रवृणीते ॥३॥ स आर्षेयमुक्त्वाह—"ब्रह्म एवदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारोऽसौ मानुषः"—इति ॥ ४ ॥ स प्रवृतो होता जपति—"एतत् त्वा देव

सवितर्वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेणाग्ने पूषन् बृहस्पते प्र च वद प्र च यज वसूनां रातौ स्याम रुद्राणामुर्व्यायां स्वादित्या अदितये स्यामाने हसः। जुष्टामद्य देवेभ्यो वाचमुद्यासं जुष्टां ब्रह्मभ्यो जुष्टां नराशंसाय। यदद्य होतृवर्य्ये जिह्मं चक्षुः परापतत्. अग्निष्टत् पुनराभ्रियाज्जातवेदा विचर्षणिः।" —इति ॥ ४ ॥ अथाध्वर्य्युं चाग्नीध्रं च संमृशति। तत्र जपति—'षण्मोर्वीरंहसस्पान्त्वग्निश्च पृथिवी चापश्च वाजश्चाहश्च रात्रिश्च"—इति ॥ ६ ॥ अथ होतृषदनमुपावर्तते। स होतृषदनादेकं तृणं निरस्यति। अथ होतृषदने उपविशति। तत्र जपति—'विश्वकर्मंस्तनूपा असि मा मोद्दोषिष्टं, मामा हिंसिष्ट, मेष वां लोकः"—इति ॥ ७ ॥ उदङ्ङेजति। अन्तरा वा एतदाहवनीयं च गार्हपत्यं चास्ते। अथाग्नीमीक्षमाणो जपति—"विश्वे-देवाः शास्तनमा, यथेह होता वृतो मनवै यन्निषद्य। प्र मे ब्रूत भागधेयं यथा वो येन यथा हव्यमा वो वहानि"—इति ॥ ८ ॥

४—अथ प्रयाजयागः।

अथ होताध्वर्य्यवे स्रुचा वादापयति—

अग्निर्होता वेत्वग्ने हौत्रं, वेत्तु प्रावित्रं, साधु ते यजमान देवता, योऽग्निं होतारमवृथाः, घृतवतीमध्वर्य्यो स्रुचमास्यस्व, देवयुवं विश्ववाराम, ईडामहै देवा ईडेन्यान्, देवा ईडेन्यान, नमस्याम नमस्यान् यजाम यज्ञिय न्"—इति ॥

१—ओश्रावय"—( ४ ) इत्याश्रावयत्यध्वर्युः।

२--अस्तु श्रौषट्"—( ४ ) इति प्रत्याश्रावयत्यग्नीत्।

३—समिधो यज"—( २ ) इति प्रैषं करोत्यध्वर्युः।

४—ये यजामहे समिधः"—( ५ ) इत्यागुरमुक्त्वा।

५—समिधो अग्ने आज्यस्य व्यन्तु वौषट्"—( २ ) इति याज्या पठित्वा वषट् करोति होता ॥

सोऽनुब्रूहीत्येवोक्त्वाऽध्वर्य्युर्नापव्याहरेन्नो एव होताऽपव्याहरेत ॥ आश्रावय्याध्वर्य्युस्तदग्नीध्रं यज्ञ उपावर्तते। सोऽग्नीन्नाप व्याहरेदा प्रत्याश्रावणात् ॥ प्रत्याश्रावयत्यग्नीत्, तत्पुनरध्वर्य्युं यज्ञ उपा वर्तते ॥ सोऽध्वर्य्युर्नाव्याहरेद् आ यजेति वक्तोः। यजेत्येवाध्वर्य्युर्होत्रे यज्ञं संप्रयच्छति ॥ स होता नापव्याहरेद् आवषट्कारात्। इति नु हविर्यज्ञे ॥ स यत्र हैवमृत्विजः संविदाना यज्ञेन चरन्ति सर्वमेव तत्र कल्पते न मुह्यति ॥ १ ॥

स यदि वृष्टिकामः स्याद् यदीष्ट्या वा यजेत दर्शपूर्णमासयोर्वैव ब्रूयात्—"वृष्टिकामो वा आरभे"—इति ॥ तत्रो अध्वर्य्युं ब्रूयात्—पुरोवातं च विद्युतं च मनसाध्याय"—इति। अभ्राणि मनसाध्याय—इत्यग्नीध्रम् ॥ स्तनयित्नुं च वर्षं च मन-

साध्याय"—इति होतारम्। सर्वाण्येतानि मनसाध्याय"—इति ब्रह्माणम्॥ वर्षति हैव तत्र यत्रैवमृत्विजः संविदाना यज्ञेन चरन्ति ॥ २ ॥

समिधः, तनूनपात्, इडः, बर्हिः, स्वाहा—इति प्रयाजाः पञ्च। ते वा आज्यहविषो भवन्ति ॥ १ ॥ स यत्रैव तिष्ठन् प्रयाजेभ्य आश्रावयेत् तत एव नापक्रामेत्॥ यत्रो एव समिद्धतमं मन्येत तदाहुतीर्जुहुयात् ॥ २ ॥ स आश्राव्याह—समिधो जेति। अथ यज यजेत्येवोत्तरानाह ॥ ३ ॥ स वै व्यन्तु वेतु—इति यजति ॥ ४ ॥ अथ चतुर्थे प्रयाजे समानयति बर्हिषि स वा अनवमृशन् समानयति ॥ ५ ॥ अथोत्तरां जुहूमध्यूहति ॥ ६ ॥ उत्तमे प्रयाजे स्वाहास्वाहेति यजति यावन्ति हविषि भवन्ति।

१—स्वाहाग्निम्—इति तदाग्नेयमाज्यभागम्।

२—स्वाहा सोमम्—इति तत् सौम्यमाज्यभागम्।

३—स्वहाग्निम—इति तद् य एष उभयत्राच्युतः आग्नेयः पुरोडाशस्तम्।

६—अथ यथादेवतम—

७—स्वाहा देवा आज्यपाः—इति तत् प्रयाजानुयाजान्।

८—जुषाणो अग्निराज्यस्य वेतु—इति तदग्निं स्विष्टकृतम् ॥ ७ ॥

उत्तमं प्रयाजमिष्ट्वा यथापूर्वं हवींष्यभिघारयति। यस्य कस्य च हविषोऽवद्यति। पुनरेव तदभिघारयति। अथ यदा स्विष्टकृतेऽवद्यकृति न ततः पुनरभिघारयति॥

प्रथमे प्रयाजे इष्टे ब्रूयात्—एको ममेति। एका तस्य यमहं द्वेष्मि—इति ॥१॥

यद्यु न द्विष्यात्—योऽस्मान् द्वेष्टि यं च वयं द्विष्मः—इति ब्रूयात् ॥ २ ॥

द्वौ ममेति द्वितीये प्रयाजे। द्वे तस्य—योऽस्मान् द्वेष्टि यं च वयं द्विष्मः—इति॥३॥

त्रयो ममेति तृतीये प्रयाजे। तिस्रस्तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म—इति॥४॥

चत्वारो ममेति चतुर्थे प्रयाजे। चतस्रस्तस्य योऽस्मान्द्वेष्टियं च वयं द्विष्म—इति॥५॥

पञ्च ममेति पञ्चमे प्रयाजे। न तस्य किञ्चन, योऽस्मान्द्वेष्टि यं च वयं द्विष्म—इति॥६॥

स यद्येनं पुरस्ताद् यज्ञस्यानु व्याहरेत् तं प्रति ब्रूयाद्—'मुख्यामार्तिमारिष्यसि'—अन्धो वा बधिरो वा भविष्यसि"—इति॥ यदि मध्यतो यज्ञस्यानुव्याहरेत् तं प्रति ब्रूयाद्—अप्रजा अपशुर्भविष्यसि" —इति॥ यद्यन्ततो यज्ञस्यानुव्याहरेत् तं प्रति ब्रूयाद्—अप्रतिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकमेष्यसि"—इति॥ तस्मादुह नानुव्याहारीव स्यात् ॥ १० ॥

स आज्यस्योपस्तीर्य द्विर्हविषोऽवदाय अथोपरिष्टादाज्यस्याभिघारयति। सैषाऽऽज्येन मिश्राहुतिर्हूयते ॥ ११ ॥

अनुवचनानि, आघारो, हौत्रम्, प्रयाजाः॥

इति अन्तरङ्गगुणकर्मचतुष्टयाधिकारः ॥ २ ॥

## ३—प्रधानकर्माधिकारः ।

### १—अथ पूर्णमासविधिः।

स वै पौर्णमासेनोपवत्स्यन् न सत्रा सुहित इव स्यात् तेनेदमुदरमसुर्य्यं क्लिना-त्याहुतिभिः प्रातर्देवम् ॥ १ ॥ स वा उत्तरामेवोपवसेदित्युहैक आहुः । स वै संप्रत्ये-वोपवसेत् ॥ २ ॥ उत्तरार्द्धपूर्वार्द्धे हैके आग्नेयमाज्यभागं जुह्वति दक्षिणार्द्धपूर्वार्द्धे सौम्यमाज्यभागम् । यत्रो एव समिद्धतमं मन्येत तदाहुतीर्जुहुयात् ॥ ३ ॥ स वा ऋचमनूच्य जुषाणेन यजति ॥ ४ ॥

१—आग्नेयमाज्यभागम् ।

२—सौम्यमाज्यभागम् ।

३—आग्नेयं पुरोडाशमष्टाकपालम् ।

४—अग्नीषोमीयमाज्यमुपांशुयाजम् ।

५—अग्नीषोमीयं पुरोडाशमेकादशकपालम् ।

६—आग्नेयं पुरोडाशं स्विष्टकृतम्-इति षडाहुतिर्जुहोति ॥

१—तत्राग्नेयस्याज्यभागस्य तावत्—

"अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः"—

इति पुरोनुवाक्या । "जुषाणो अग्निराज्यस्य हविषो वेतु"—इति याज्या ॥ १ ॥

२—अथ सौम्यस्याज्यभागस्य—

"त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतुः"—इति पुरोनुवाक्या ।

"जुषाणः सोम आज्यस्य हविषो वेतु"—इति याज्या ॥ २ ॥

३—अथाग्नेयस्य पुरोडाशस्याष्टाकपालस्य—

"अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति"—इतिपुरोऽनु-वाक्या । "भुवोयज्ञस्य रजसश्च नेता यत्रानियुद्भिः सचसे शिवाभिः । दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहाम्"—इति याज्या ॥ ३ ॥

४—अथाग्नीषोमीयस्याज्यस्योपांशुयाजस्य—

"अग्नीषोमाविमं सुमे शृणुतं वृषणाहवम् । प्रतिसूक्तानि हर्य्यतम्—भवन्तं दाशुषेमयः" इति पुरोऽनुवाक्या । "जुषाणाग्नीषोमावाज्यस्य हविषो वीताम्"—इति वा याज्या ॥ ४ ॥

५—अथाग्नीषोमीयपुरोडाशस्यैकादशकपालस्य—

"अग्नीषोमा सवेदसा सहूतीवनन्तं गिरः सं देवत्रा बभूवथ"—इति पुरोऽनुवाक्या । "युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्त । युवं सिन्धूरभिशस्तेरवद्यादग्नीषोमाव-मुञ्चतं गृभीताम्"—इति याज्या ॥ ५ ॥

६—अथाग्नेयस्य पुरोडाशस्य स्विष्टकृतः—

"प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ। त्वां शश्वन्त उपयन्ति वाजाः"—इति संयाज्या।

अयाडग्निरग्नेः प्रिया धामानि।
अयाट् सोमस्य प्रिया धामानि।
अयाडग्नेः प्रिया धामानि।
अयाडग्नीषोमयोः प्रिया धामानि।
अयाड् देवानामाज्यपानां प्रिया धामानि।
यक्षदग्नेर्होतुः प्रिया धामानि।
यक्षत् स्वं महिमानम्।
आयजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविः।
इमो अग्ने वितमानि हव्याजस्रो वक्षि देवतातिमच्छ।
प्रतिवर्यी सुरभाणि व्यन्तु।

॥ इति स्विष्टकृन्निगदपूर्वा संयाज्या ॥

२—दर्शेष्टिविधिः।

१—आग्नेयमाज्यभागम्।
२—सौम्यमाज्यभागम्।
३—आग्नेयं पुरोडाशमष्टाकपालम्।
४—वैष्णवमाज्यमुपांशुयाजम्।
५—ऐन्द्रं सांनाय्यम्।
६—आग्नेयं पुरोडाशं स्विष्टकृतम्"—इति षडाहुतीर्जुहोति ॥

१—तत्राग्नेयस्याज्यभागस्य तावत्—

अग्निः प्रत्नेन मन्मना कविर्विप्रेण वावृध—इति पुरोऽनुवाक्या।

२—अथ सौम्यस्याज्यभागस्य—

"सोमं गीर्भिष्ट्वा वयं वर्द्धयामो वचोविदः। सुमृडीकेन आविश"—इति पुरोऽनुवाक्या।

३—अथाग्नेयस्य पुरोडाशस्याष्टाकपालस्य—

अग्निर्मूर्द्धा दिवः ककुत् पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति—इतिपुरोऽनुवाक्या। भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचते शिवाभिः। दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्—इति याज्या ॥ ३ ॥

४—अथ वैष्णवस्याज्यस्योपांशुयाज्यस्य—

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांशुरे"—इति पुरोऽनुवाक्या ।

(१) प्र तद् विष्णुस्तवते वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ १ ॥ इति याज्या ;

(२) वषट् ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्द्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ २ ॥ इति वा याज्या ।

(३) जुषाणो विष्णुराज्यस्य हविषो वेतु"—॥ ३ ॥ इति वा याज्या ।

५—अथैन्द्रस्य सान्नाय्यस्य—

इन्द्रसानसिं रयिं सजित्वानं सदासहं, वर्षिष्ठमूतये भर—इति पुरोऽनुवाक्या । इन्द्र प्रशासाहिषे पुरुहूत शत्रुज्येष्ठस्ते शुष्म इह रातिरस्तु इन्द्रा भर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम्—इति याज्या ।

६—अथाग्नेयस्य पुरोडाशस्य स्विष्टकृतः—

पिप्रीहि देवा उशतो यविष्टं विद्वां ऋतु ऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतृणामस्या यजिष्ठ"—इति पुरोऽनुवाक्या ।
विष्णो प्रिया धामान्ययाट् । इन्द्रस्य प्रिया धामान्ययाट् ।
देवानामाज्यपानां प्रिया धामानि । यक्षदग्नेर्होतुः प्रिया धामानि ।
यक्षत् स्वं महिमानम् । आ यजतामेज्या इषः कृणोतु । सो अध्वरा जातवेदा जुषतां हविः । अग्ने यदद्य विशो अध्वरस्य होतः पावक शोचेष्टं हि यज्वा ऋताहि जासि महिना विघद्भूर्हव्यावह यविष्ठया ते अद्य—इति याज्या ।

३—अथ सान्नाय्यक्लृप्तिः ।

शृतं ह वै दधि सांनाय्यम् । तदाहुः—नासोमयाजी संनयेत् । इति ॥ तदुसमेव नयेत् ॥ १ ॥ स वै पर्णशाखया वत्सानपाकरोति ॥ २ ॥ तमाच्छिनत्ति ॥ ३ ॥ अथ मातृभिर्वत्सान् समवार्जयन्ति । स वत्सं शाखयोपस्पृशति ॥ ४ ॥ अथ मातृणामेकां शाखयोपस्पृशति वत्सेन व्याकृत्य ॥ ५ ॥ अथाहवनीयागारस्य वा पुरस्ताद् गार्हपत्यागारस्य वा शाखामुपगूहति । तस्यां पवित्रं करोति ॥ ६ ॥ अथ यत्राग्वैतां रात्रिमग्निहोत्रं जुहोति ॥ ७ ॥ अथोखामादत्ते ॥ ८ ॥ अथ पवित्रं निदधाति । तद्वै प्राङ् निदध्यात् । अथो उदक् ॥ ९ ॥ अथ वाचंयमो भवति । आ तिसृणां दोग्धोः ॥ १० ॥ तदानीयमानमभिमन्त्रयते—

देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा"—इति ॥ ११ ॥ अथाह 'कामधुक्ष'—इति । अमूमिति । स विश्वायुरिति ॥ १२ ॥ अथ द्वितीयां पृच्छति ।

'कामधुक्त'—इति । अमूमिति । सा विश्वकर्मेति ॥ १३ ॥ अथ तृतीयां पृच्छति । 'कामधुक्त'—इति । अमूमिति । सा विश्वधाया इति ॥ १४ ॥ अथ कामं वदति ॥१५॥ अथोत्तमां दोहयित्वा येन दोहयति पात्रेण, तस्मिन्नुदस्तोकमानीयं न्यङ्क्य प्रत्यानयति ॥ १६ ॥ तदुद्वास्यातनक्ति ॥ १७ ॥ अथोदकवतोत्तानेन पात्रेणापि दधाति ॥१८॥

इति सान्नाय्यस्योपचारः ।

४—अवदानोपचारपरिभाषा ।

यत्किञ्चाग्नौ जुह्वति तदवदानं नाम ॥ १ ॥ तद्वै चतुरवत्तं भवति । उतो पञ्चावत्तमेव भवति । एतद्ध न्वेव प्रज्ञातं कौरुपाञ्चालं—यच्चतुरवत्तम् ॥ २ ॥ स वै यावन्मात्रमिवैवावद्येत ॥ ३ ॥ स आज्यस्योपस्तीर्य्य, द्विर्हविषोऽवदाय, अथोपरिष्टादाज्यस्याभिघारयति । उभयत आज्यं भवति ॥ ४ ॥ सोऽनुवाक्यामनूच्य, याज्यामनुद्रुत्य पश्चाद् वषट् करोति । सह वैव वषट्कारेण जुहुयाद् वषट्कृते वा ॥ ५ ॥ स वै गायत्रीमन्वाह, अथ त्रिष्टुभा यजति ॥ ६ ॥ स वा अङ्क्यन्निवैवानुवाक्यानुब्रूयात् । क्षिप्र एव याज्यया त्वरेत् ॥ ७ ॥ ह्वयति वा अनुवाक्यया, प्रयच्छति याज्यया । तस्मादनुवाक्यायै रूपम्—"हुवे, हवामहे, आगच्छ, इदं बर्हिः सीद"—इति । याज्यायै रूपम्—'वीहि, हविर्जुषस्व, हविरावृषायस्व, अद्धि, पिब, प्र"—इति ॥ ८ ॥ सा ह न्वेव समृद्धानुवाक्या यस्यै प्रथमात् पदाद्देवतामभिव्याहरति । सो एव समृद्धा याज्या यस्या उत्तमात् पदाद्देवताया अधिवषट् करोति ॥ ९ ॥ स वै वौगिति करोति, षडिति ॥ १० ॥ तद् याविहोत्रमित्याचक्षते ॥ ११ ॥

यस्यै कस्यै च देवतायै हविर्गृह्यते सर्वत्रैव स्विष्टकृदन्वाभक्तः ॥ १ ॥ तद्वा अग्नये इति क्रियते । ( अग्निर्वै स देवः । तस्यैतानि नामानि—सर्व इति यथा प्राच्या आचक्षते, भव इति यथा वाहीकाः । पशूनां पती रुद्रोऽग्निरिति । तान्यस्याशान्तान्येवेतराणि नामानि, अग्निरित्येव शान्ततमम ) ॥ २ ॥ स वा उत्तरार्द्धादवद्यति, उत्तरार्द्धे जुहोति । स वा अभ्यर्द्ध इवेतराभ्य आहुतिभ्यो जुहोति ॥ ३ ॥

एतं गार्हपत्यात् प्राञ्चमुद्धरन्ति । तं वा अष्टासु विक्रमेष्वादधीत, एकादशस्वादधीत, द्वादशस्वादधीत । नात्र मात्रास्ति । यत्रैव स्वयं मनसा मन्येत तदादधीत ॥ ४ ॥

तदाहुः—आहवनीये हवींषि श्रपयेयुरिति, उतो गार्हपत्ये एव श्रपयन्ति ॥ यतरथा कामयेत तथा कुर्य्यात ॥ १ ॥ अग्निमभितः परिस्तृणन्ति ॥ २ ॥ सस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रयात् ॥ ३ ॥

॥ इति प्रधानकर्माधिकारः ॥ ३ ॥

## ४—उत्तरकर्माधिकारः।

### १—प्राशित्रहरणम्। भागहरणम्। ब्रह्मप्राशनम्।

प्राशित्रमवद्यति ; अथाप उपस्पृशति ॥ १ ॥ अथेडां पशून् समवद्यति। स वै यावन्मात्रमिवैवावद्येत् ॥ २ ॥ अन्यतरत आज्यं कुर्य्यादधस्ताद्वोपरिष्टाद्वा ॥ ३ ॥ स आज्यस्योपस्तीर्य्य द्विर्हविषोऽवदाय अथोपरिष्टादाज्यस्याभिघारयति ॥ ४ ॥ तन्न पूर्वेण परिहरेत। इत्येव तिर्य्यक् प्रजिहीत ॥ ५ ॥ तत् प्रतिगृह्णाति ॥ ६ ॥ तत् प्राश्नाति ॥ तन्न दद्भिः खादेत् ॥ अथाप आचामति ॥ ७ ॥ अथ परिक्षाल्य पात्रम् ॥८॥ अथास्मै ब्रह्मभागं पर्य्याहरन्ति ॥ ९ ॥ स वै वाचंयम एव स्यात्—"ब्रह्मन् प्रस्थास्यामीत्येतस्माद्वचसः ॥ १० ॥ स यदि पुरा मानुषीं वाचं व्याहरेत् तत्रो वैष्णवीमृचं वा यजुर्वा जपेत् ॥ तस्यो हैषा प्रायश्चित्तिः ॥ ११ ॥

स यत्राह—ब्रह्मन् प्रस्थास्यामीति। तद् ब्रह्मा जपति—

"एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे।

तेन यज्ञमव, तेन यज्ञपतिं, तेन मामव।"

"मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु।

विश्वेदेवास इह मादयन्ताम्—ओं प्रतिष्ठ।" इति ॥

स यदि कामयेत—ब्रूयात्—'प्रतिष्ठ"—इति। यद्यु कामयेत—अपि नाद्रियेत् ॥

### २—इडा–इडाह्वानम्, इडाप्राशनम्।

इडया चरति। सा वै पञ्चावत्ता भवति ॥ १ ॥ स समवदायेडां, पूर्वार्द्धं पुरोडाशस्य प्रशीर्य्य पुरस्ताद् ध्रुवायै निदधाति ॥ २ ॥ तां होत्रे प्रदाय दक्षिणात्येति। स होतुरिह निलिम्पति। तद्धोतौष्ठयोर्निलिम्पते ॥ ३ ॥ अथ होतुः पाणौ समवद्यति। ( तयाऽऽत्मन्क्षुतया होता यजमानायाशिषमाशास्ते ) ॥ ४ ॥ अथोपांशूपह्वयते—

उपहूतं रथन्तरं सह पृथिव्योप मां रथन्तरं सह पृथिव्या ह्वयताम् ॥ १ ॥

उपहूतं वामदेव्यं सहान्तरिक्षेणोप मां वामदेव्यं सहान्तरीक्षेण ह्वयताम् ॥ २ ॥

उपहूतं बृहत् सह दिवोप मां बृहत् सह दिवा ह्वयताम् ॥ ३ ॥

उउहूता गावः सहर्षभा ॥ ४ ॥ उपहूता सप्तहोत्रा ॥ ५ ॥ उपहूतेडा तनुरिः ॥ ६ ॥

उपहूतः सखा भक्षः ॥ ७ ॥ उपहूतं हेक् ॥ ८ ॥

अथ प्रतिपद्यते—

इडोपहूतोप तेडोपो अस्माँ २॥ इडाह्वयतामिडोपहूता।

मानवी घृतपदी उत मैत्रावरुणी ब्रह्मा देवकृतोपहूता।

उपहूता दैव्या अध्वर्य्यवः; उपहूता मनुष्याः।

य इमं यज्ञमवान्. येन यज्ञपतिवर्धमान् ।
उपहूते द्यावापृथिवी पूर्वजे ऋतावरीदेवी देवपुत्रे
अयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसे हविष्करणे उपहूतः ।
जीवेयं, प्रजामेस्याच्छ्रियं गच्छेयम् । देवाम इदंहविजुं षन्तोम् ॥

तां वै प्राश्नन्त्येव नाग्नौ जुह्वति । प्राणेष्वेव हूयते-होतरित्वत् यजमानेत्वत्, अध्वर्य्यौ त्वत् । अथ यत् पूर्वार्द्धं पुरोडाशस्य प्रशीर्य्य पुरस्ताद् ध्रुवायै निदधाति । तद् यजमानस्य प्राशितं भवति ॥ १ ॥ सर्वेप्राश्नन्ति ॥ २ ॥ पञ्च प्राश्नन्ति ॥ ३ ॥ अथ यत्र प्रतिपद्यते तच्चतुर्धा पुरोडाशं कृत्वा वहिषदं करोति ॥ ४ ॥ अथ यत्राह—उपहूते द्यावापृथिवी इति-तदग्नीधे आदधाति । तदग्नीत् प्राश्नाति ॥ ५ ॥ अथ यत्राशिषमाशास्ते तज्जपति "मयीदमिन्द्र इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम्; अस्माकं सन्त्वाशिषः, सत्यानः सन्त्वाशिषः"—इति ॥ ६ ॥ अथ पवित्रयोर्मार्जयन्ते ॥ ७ ॥ अथते पवित्रे प्रस्तरेऽपिसृजति ॥ ७ ॥

### ३—अनुयाजः ।

ते वा एते उल्मुके उद्वहन्ति—अनुयाजेभ्यः ॥ १ ॥ ते पुनरनुसंस्पर्शयन्ति ॥२॥ अथसमिधमभ्यादधाति ॥ ३ ॥ तां होतानुमन्त्रयते—"एषाते अग्ने समित्, तया वर्द्धस्वचाचप्यायस्व वर्द्धिषीमहि च वयमा च प्यासिषीमहि"—इति ॥ तद्देव्द्धोतुः कर्म्म । सयदि मन्येत—न होता वेदेति, अपि स्वयमेव यजमानोऽनुमन्त्रयेत ॥ ४ ॥ अथ संमार्ष्टि ॥ सकृत् सकृत् संमार्ष्टि ॥ ५ ॥

अथानुयाजान् यजति ॥ १ ॥ स वै खलु बर्हिः प्रथमं यजति । अथ नराशंसं[२] द्वितीयं यजति । अथाग्निरुत्तमः ॥ २ ॥ देवान् यजेत्येवाध्वर्युराह देवं देवमिति सर्वेषु होता ॥ ३ ॥ अथोत्तममनुयाजमिष्ट्वा समानीय जुहोति ॥ ४ ॥

स वै स्रुचौव्यूहति । यजमानोवाध्वर्य्युर्वा ॥ जुहूं प्राचीं दक्षिणेन पाणिना । उपभृतं प्रतीचीं सव्येन पाणिना ॥ १ ॥ अग्नीषोमीयं हि पौर्णमास हविर्भवति । ऐन्द्राग्नंह्यामावास्यं हविर्भवति ॥ २ ॥ अथ जुह्वा परिधीन् समनक्ति । अथ परिधिमभिपद्याश्रावयति । स आश्राव्याह—"इषिता दैव्या होतारो, भद्रवाच्याय, प्रेषिता मानुषः सूक्तवाकाय"—इति ॥ ३ ॥ अथ प्रस्तरमादत्ते ॥ ४ ॥ स यदि वृष्टिकामः स्याद्—एतेनैवाददीत—"संजनाथां द्यावापृथिवी. मित्रा वरुणौत्वा वृष्ट्याऽवताम्"—इति ॥ ४ ॥ स वा अग्रं जुह्वामनक्ति, मध्यमुपभृति, मूलंध्रुवायाम् ॥ ६ ॥ तन्नाचैरिव हरति ॥ ७ ॥ अथैकं तृणमपगृह्णाति । तन्मुहूर्तं धारयित्वाऽनुप्रहरति । तं प्राञ्चमनु समस्यति । अथो उदञ्चम् । तमङ्गुलिभिरेव यो युप्येरन् न काष्ठैर्दारुभिर्वा ॥ ८ ॥

यदा होता सूक्तवाकमाह, अथाग्नीदाह—"अनुप्रहर"—इति । तूष्णीमेवानुप्रहृत्यात्मानमुपस्पृशति ॥ ६ ॥ अथाह—"संवदस्व"—इति । आगानग्नीत्—इत्याह । अग्निरितरः प्रत्याह "श्रावय"—इति। 'श्रौषट्"—इति ॥ १० ॥ अथाह—स्वगा दैव्या होतृभ्यः स्वस्तिमानुषेभ्यः इति ॥ ११ ॥ अथपरिधीननुप्रहरति । समध्यममेवाग्रे परिधिमनुप्रहरति । इतरावनुसमस्यति ॥ १२ ॥ अथजुहूं चोपभृतं च संप्रगृह्णाति । सवै विश्वेभ्यो देवेभ्यः संप्रगृह्णाति । स यस्यानसो हविर्गृह्णन्ति अनसस्तस्य धुरि विमुञ्चन्ति । यस्योपात्र्यैःफोटस्य ॥ स सादयति ॥ १३ ॥

४—प्रतिपत्तयः ।

अथ प्रतिपद्यते—

इदंद्यावपृथिवीभद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकम् । अग्ने त्वं सूक्तवागस्युपश्रुती दिवस्पृथिव्यो रोमन्वतीतेऽस्मिन् यज्ञे यजमान द्यावा पृथिवीस्ताम् । शंगवी जीवदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ, वृष्टिद्यावारीत्यापं शम्भुवौ मयोभुवौ, ऊर्जस्यती च पयस्वती च, सूपचरणा च स्वधि चरणा च, तयो राविदि ॥ १ ॥

अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । सोम इदं हविरजुषतावीवृधत महोऽज्यायोकृत । अग्निरिदं हविरजुषतावीवृधत महोज्यायोऽकृत । अथ यथा देवतम् । देवा आज्यपा आज्यमजुषन्तावीवृधन्त महोज्यायोऽकृत । अग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽकृत ॥ २ ॥

अस्यामृधेद्धोत्रायां देवंगमाया माशास्तेऽयं यजमानोऽसौ– १ दीर्घायुत्वमाशास्ते, २ सुप्रजास्त्वमाशास्ते, ३ भूयो हविष्करण माशास्ते, ४ सजात वनस्यामाशास्ते, ५ दिव्यं धामाशास्ते, तदश्यात् तदृध्यात् ॥ ३ ॥

ता वा एताः पञ्चाशिषः करोति,तिस्र इडायां ता अष्टौ ॥ नातो भूयसीःकूर्यात्॥४॥

त दस्मै देवारासन्तां, तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परिमानुषाः । इष्टं च वित्तं च उभे चैनं द्यावापृथिवी अंहसस्यताम् इहगतिर्वामस्य, इदं च नमो देवेभ्यः" इति ॥ ५ ॥

अथ शंयोराह—सप्रतिपद्यते—

तच्छयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये, दैवीस्वस्तिरस्तुनः

स्वतिर्मानुषेभ्यः, ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे शं चतुष्पदे ॥ ६ ॥
अथानयेत्युपस्पृशति ॥ ७ ॥

५—पत्नीसयाजः ।

ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति ॥ १ ॥ जुहूं च स्रुवं चाध्वर्य्युरादत्ते, वेदं होता, आज्यविलापनीमग्नीत् ॥ २ ॥ तद्धैकेषामध्वर्य्युः पूर्वेणाहवनीयं पर्य्येति तदु तथा न कुर्य्यात् ॥ ३ ॥ जघनेनोहैव पत्नीमेकेषामध्वर्य्युरेति नो एव तथा कुर्य्यात् ॥४॥ अन्तरेणोहैवपत्नीमेकेषामध्वर्य्युरेति नो एव तथा कुर्य्यात् ॥५॥ पूर्वेणैव गार्हपत्यमन्तरेणाहवनीयंचैति । यथो एवादः प्रचरन्नन्तरेण संचरति सउएवास्यैष सञ्चरो भवति ॥ ६ ॥

अथ पत्नीः संयाजयन्ति ॥१॥ चतस्रोदेवता यजति । तावा आज्यहविषो भवन्ति । तेनोपांशुचरन्ति ॥ २ ॥ अथ सोमं यजति । अथ त्वष्टारं यजति । अथ देवानां पत्नीर्यजति । स यत्र देवानां पत्नीर्यजति तत्पुरस्तात् तिरःकरोति ॥ अथाग्निं गृहपतिंयजति ॥ ३ ॥ तदिडान्तं भवति न ह्यत्र परिधयो भवन्ति न प्रस्तरः ॥ ४ ॥ स यदि प्रस्तरस्य रूपं कुर्य्याद्—वेदस्यैकंतृणमाच्छिद्याग्रं जुह्वामनक्ति, मध्यं स्रुवेबुध्नं स्थाल्याम् ॥ ५ ॥ अथाग्नीदाह—"अनुप्रहर"—इति । तूष्णीमेवानुप्रहृत्यात्मानमुपस्पृशति ॥ ६ ॥ अथाह—"संवदस्व"—इति । अगानग्नीद्; 'अगन्' । 'श्रावय' श्रौषट् । स्वगा-दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शयोर्ब्रूहि"—इति ॥ ७ ॥ अथ जुहूं च स्रुवं च संप्रगृह्णाति सवा अग्नये संप्रगृह्णाति ॥ ८ ॥ अथवेदं पत्नी विस्रंसयति ॥ ९ ॥ तमा वेदेः संस्तृणाति ॥ १० ॥ अथ समिष्टयजुर्जुहोति ॥ ११ ॥ अथ बहिर्जुहोति ॥ १२ ॥ तां वा अतिरिक्तां जुहोति ॥ १३ ॥ अथ प्रणीता दक्षिणतः परीत्यनिनयति । सयेनैव प्रणयति तेननिनयति ॥ १४ ॥ अथ फलीकरणान् कपालेनाधोऽधः कृष्णाजिनमुपास्यति ॥ १५ ॥

६—अथ याजमान प्रयोगः ।

संस्थिते यज्ञे दक्षिणतः परीत्य पूर्णपात्रं निनयति ॥ १ ॥ तदनूची दक्षिणायां ददाति सैति दक्षिणामन्वारभ्य यजमानः ॥ २ ॥ स एव देवयानो वा पितृयाणो वा पन्थाः । तदुभयतोऽग्निशिखे समोषन्त्यौतिष्ठतः, प्रतितमोषतो यः प्रत्युष्यः ऋत्युतं-सृजेतेयोऽतिसृज्यः ॥ ३ ॥ पूर्णं निनयति । सन्ततम व्यवच्छिन्नं निनयति ॥ ४ ॥ तदञ्जलिना प्रतिगृह्णाति ॥ ५ ॥ अथमुखमुपस्पृशते ॥ ६ ॥ अथविष्णुक्रमान् क्रमते ॥ तद्वा इत एव पराचीनं भूयिष्ठा इव क्रमन्ते ॥ परस्तात् त्वेवार्वाङ्क्रमेत य इतोऽनुशासनं चिकीर्षेत ॥ ७ ॥ अथ प्राङ् प्रेक्षते ॥ ८ ॥ अथसूर्यमुदीक्षते ॥ ९ ॥ अथावर्तते ॥ १० ॥ अथ गार्हपत्यमुपतिष्ठते ॥ ११ ॥ अथावर्तते ॥ १२ ॥ अथ पुत्रस्यनामगृह्णाति यदि पुत्रोनस्याद्—अप्यात्मन एव नाम गृह्णीयात् ॥ १३ ॥

अथाहवनीयमुपतिष्ठतेतूष्णीम् ॥ १४ ॥ अथ व्रतंविसृजते ॥ १५ ॥

स वै त्रिंशतंवर्षाणि यजेत । अथो अपि पञ्चदशैववर्षाणी यजेत । अत्र ह्येवसा सम्पत् संपद्यते ॥

इति प्रधानकर्माधिकारः ॥ ४ ॥

| बहिरङ्गकर्माधिकारः १ | | अन्तरङ्गगुणकर्माधिकारः२ | | प्रधानकर्माधिकारः ३ | | उत्तरकर्माधिकारः ४ |
|---|---|---|---|---|---|---|
| १ व्रतोपायनम् | १ | पञ्चानुवचनानि ५ | १ | पूर्णमासोपचारः | १ | ब्रह्मप्राशनम् (प्रशित्रइडा) |
| २ अपांप्रणयनम् | २ | पूर्वोत्तराघारौ २ | २ | दर्शोपचारः | २ | इडाप्राशनम् |
| ३ पात्रासादनम् | ३ | होतृप्रवरणानि ३ | ३ | सांनाय्यक्लृप्तिः | ३ | त्रयोऽनुयाजाः |
| ४ वाग्यमनम् | ४ | पञ्चप्रयाजाः ४ | ४ | परिशिष्टभाषा | ४ | प्रतिपत्तिः |
| ५ हविर्ग्रहणम् | | | | | ५ | पत्नीसंयाजाः |
| ६ यज्ञियप्रोक्षणम् | | | | | ६ | याजमानम् |
| ७ पुरोडाशक्लृप्तिः | | | | | | |
| ८ वेदिक्लृप्तिः | | | | | | |
| ९ संभरसंस्काराः | | | | | | |
| १० अग्निक्लृप्तिः | | | | | | |
| | | इति चत्वारि अन्तरङ्ग-गुणकर्माणि ४ | | इति चत्वारि प्रधान कर्माणि ४ | | इति षडुत्तरकर्माणि ६ |

## ५—अनुनिर्वाप्या-इष्टिः ।

पौर्णमासेनेष्ट्वा—इन्द्राय विमृधेऽनुनिर्वपति । तेन यथेष्ट्या—एव यजते ॥ १ ॥ आमावास्येनेष्ट्वा—अदित्यैचरुमनुनिर्वपति । तेन यथेष्ट्या—एवं यजते ॥ २ ॥ सो नुनिर्वपेद्वा, नानुनिर्वपेद्वा । संपद्यनुनिर्वपेद्—दद्यादक्षिणाम् । नादक्षिणं हविः स्यादिति ह्याहुः । दर्शपूर्णमासयोर्ह्येषा दक्षिणा—यदान्वाहार्य्य इति ॥

## ६—अथाभ्युदिता-इष्टिः ।

तद्धै के दृष्ट्वोपवसन्ति श्वोनोदेतेति । अभ्रस्य वा हेतोरनिर्ज्ञायवा । अथोतो पवसन्ति, अथैनमुताभ्युदेति ॥ स यद्यगृहीतं हविरभ्युदियात्—प्रज्ञातमेवतत् ॥ एषैव व्रतचर्य्यावत्पूर्वेद्यु—र्दुग्धं दधि, हविरातञ्चनं तत्कुर्वन्ति, प्रतिप्रमुञ्चन्तिवत्सान्—तान्

पुनरयकुर्वन्ति। तानपराह्णे पर्णशाखयाऽपाकरोति। तद्यथैवाद: प्रज्ञातमामावास्यंहविः-एवमेव तत्॥ यद्यु वृतचर्य्यां वा नोदाशंसेत, गृहीतं वा हविरभ्युदियाद्—इतस्थोतर्हि कुर्य्यात्,—एतानेवतण्डुलान् सुफलीकृतान् कृत्वा ये ऽणीयांसस्तानग्नयेदात्रे ऽष्टाकपालं पुरोडाशंश्रपयति॥ अथ यत्पूर्वेद्यु र्दुग्धं दधि, तदिन्द्रायप्रदात्रे। अथ तदानी दुग्धे बिष्णवे शिपिविष्टायैतास्तण्डुलाञ्छृतेचरुं श्रपयति॥ चरुरुह्येवस:,—पत्रकच तण्डुलान वपन्ति॥ तत्रोपच्छक्नुयात् तद्द्यात्। न दक्षिणं हविः स्यादिति ह्याहुः॥

अथ यदैव नोदियाद्—अथोपवसेत्। अद्यामा स्येति मन्यमानउपवसति॥ अथैष पश्चाद्दृशे, सहैष दिव्य: श्वा। स यजमानस्य पशूनभ्यवेक्षत, तदपशव्यं स्याद प्रायश्चितिकृत: तद् यजमानो यज्ञपथादेति। तदाहु:—कथं कुर्य्यादित्वा यज्ञपथाद्—यजेता ३ न यजेता ३ इति॥ यजेन हैव, नह्यन्यपदक्रमणं भवति, श्व: श्व एवैष ज्यायानुदेति। स आमावास्य विधिनैवेष्ट्वा ऽथेष्टि मनु निर्वपति तदहर्वैवश्वोवा॥ तस्य त्रीणि हवींषि भवन्ति—अग्नये[१] पथिकृतेऽष्टाकपालं पुरोडाशम्। इन्द्रायवृत्रघ्ने[२] एकादश कपालम्। अग्नये[३] वैश्वानराय द्वादशकपालपुरोडाशम्[३]॥ तस्यै सप्तदशसामिधेन्यो भवन्ति उपांशु देवता यजति। या: कामयते ता याज्यानुवाक्या: करोति। एवमाज्य-भागौ, एवं संयाज्ये॥ तिसृधन्वं दक्षिणां ददाति, दण्डं दक्षिणां ददाति। एषाऽन्वादिष्टा दक्षिणा। दद्यात् त्वेवास्यामप्यन्यद्—या इतरा दक्षिणास्तासां यत् संपद्येत्। सा हैषा पशव्येष्टि:। तयाप्यनभ्युद्दृष्टो यजेतैव॥

१—पञ्चप्रयाजा:[५] द्वावाज्यभागौ[२] स्विष्टकृत्[१], त्रयोऽनुयाजा:[३] – तावाएता एकादशदेवता:[११] ता एकादशाहुतय:॥ चत्वार:[४] पत्नीसंयाजा:, अथेडा एन्य षोड़शाहुतयो भवन्ति॥ (१६)॥

२—पञ्चदशसामिधेन्य:[१५], द्वावाघारौ[२] पञ्चप्रयाजा:[५] इडा[१], त्रयोऽनुयाजा:[३], सुक्त-वाश्च[१], शंयोवकिश्च[१]। अथ यदेवाद:[१] पत्नीसंयाजेषु संप्रगृह्णाति, समिष्टयजुश्च[१]। ता: पञ्चादशाहुतय:॥ (१५)॥ ३०॥

३—द्वावाघारौ[२] पञ्चप्रयाजाः[५] द्वावाज्यभागौ[२] आग्नेयः[१] पुरोडाशः अग्नीषोमीय उपांशुयाजः[१] अग्नीषोमीयः[१] पुरोडाशः अग्नीः स्विष्टकृत[१] इडा त्रयोऽनुयाजाः[३] सुक्तवाकश्च,[१] शम्योर्वाकश्च,[१] अथ[१] यदेवादः पत्नीसंयाजेषु[१] संगृह्याति समिष्टयजुश्च[१]—ता एकविंशति-राहुतयः ॥ ३ ॥ ६७ ॥ २१ ॥

एष नु दर्शपूर्णमासः ॥ ३ ॥

---

## ४ – अथपिण्डपितृयज्ञस्य ।

यदैवैष न पुरस्तान्नपश्चाद्ददृशेऽथ पितृभ्यो ददाति । स वा अपराह्ने ददाति । स जघनेन गार्हपत्यं प्राचीनावीती भुत्वा दक्षिणासीनं एतंगृह्णाति । स तत एवोयोत्थायोत्तरेणान्वाहार्य्यपचनं दक्षिणातिष्ठन्नवहन्ति, सकृत् फलीकरोति । तं श्रपयति । तस्मिन्नधिश्रिते आज्यं प्रत्यानयति । स उद्वास्याग्नौ द्वे आहुतीजुहोति देवेभ्यः । स वा अग्नये च सोमाय च जुहोति ॥ १ ॥ अग्नौपेक्षणमभ्यादधाति तत् स्विष्टकृद्भाजनम् । अथ दक्षिणेनान्वाहार्य्यपचनं सकृदुल्लिखति तद्वेदिभाजनम् ॥ २ ॥ अथ परस्तादुल्मुकं निदधाति ॥ ३ ॥ अथोदपात्रमादायावनेजयति ॥ ४ ॥ अथ सकृदाच्छिन्नान्युपमूलं दिनानि भवन्ति । तानि दक्षिणोपस्तृणाति । तत्र ददाति स वा इति ददाति । तत्र जपति—"अत्र पितरोमादयध्वं यथाभागमावृषायध्वम्" इति ॥ ५ ॥ अथ पराङ् पर्य्यावर्तते । स वै मुहूर्तमेवासित्वा अथोपपल्यय्य जपति—"अमीमदन्तपितरो यथा भागमावृषायिषत"–इति ॥ ६ ॥ अथोदपात्रमादायावने जपति ॥ ७ ॥ अथ नीविमुद्वृह्य नमस्करोति ॥ षट्कृत्वो नमस्करोति ॥ ८ ॥ अथावजिघ्रतिप्रत्यवधायपिण्डान् ॥ ९ ॥ अग्नौ सकृदाच्छिन्नान्यभ्यादधाति ॥ १० ॥ पुनरुल्मुकमपिसृजति ॥ ११ ॥

एष नु पिण्डपितृयज्ञः ॥ ४ ॥

---

## ५—अथ आग्रयणेष्टिः ।

आग्रयणेष्ट्या यजते ॥ १ ॥ ऐन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । वैश्वदेवश्चरु भवति । तं वै पुराणानां कुर्य्यादित्याहुः । तौ वा उभावेव नवानां स्यातां यद्धि पुरोडाश इतश्चरुरितरः ॥ २ ॥ द्यावा पृथिव्य एक कपाल, पुरोडाशो भवति ॥ ३ ॥ आज्यस्यैव यजेत ॥ ४ ॥ तस्य प्रथमजो गौर्दक्षिणा ॥ ५ ॥ स यदीजानः स्याद्—दर्शपूर्णमासाभ्यां वा यजेत, अथैतेन यजेत । यद्यु अनीजानः स्यात्—चातुः प्राश्यमेवैतमोदन मन्वाहार्य्यपचने पचेयुः—तं ब्रह्मणा अश्नीयुः तत्रोपच्छक्नुयात् तद्द्यात्, नादक्षिणंहविः स्यात् ॥ ६ ॥ नाग्निहोत्रे जुहुयात् ॥ ७ ॥

इति आग्रयणेष्टिः ॥ ५ ॥

---

## ६—अथ दाक्षायणेष्टिः, वसिष्ठयज्ञः ।

दाक्षायणयज्ञेन यजेत । एतमेकेवसिष्ठयज्ञ इत्याचक्षते ॥ १ ॥ स वा एकैक एवानूचीनाहं पुरोडाशो भवति ॥ २ ॥ स वै द्वे पौर्णमास्यौ यजते, द्वे अमावास्ये ॥ ३ ॥ अथ पूर्वेद्युरग्नीषोमीयेण यजते, पौर्णमास्याम् । अथ प्रातराग्नेयः पुरोडाशो भवति, ऐन्द्रं सांनाय्यम् ॥ ४ ॥ अथ पूर्वेद्युरैन्द्राग्नेन यजतेऽमावास्याम् । अथ प्रातराग्नेयः पुरोडाशो भवति मैत्रावरुणीपयस्या ॥ ५ ॥ अथ वाजिभ्यो वाजिनं जुहोति ॥ स वै पश्चादिव यज्ञस्य जुहोति ॥ ६ ॥ स वै प्रागेवाग्रे जुहोति—"अग्नेर्वीहीति" अनु वषट् करोति तत् स्विष्टकृद्भाजनम् ॥ अथ दिशो व्याधारयति ॥ ७ ॥ तद्वै पञ्चैव भक्षयन्ति—होताच[1], अध्वर्युश्च[2], ब्रह्माच[3], अग्नीच्च[4] यजमानः प्रथमो यजमानो भक्षयति। अथो अप्युत्तमः उपहूतः ॥ ८ ॥

इति दाक्षायणेष्टिः वसिष्ठयज्ञः ॥ ६ ॥

---

## ७—अथ चातुर्मास्यानां पर्वाणि ।

तत्रादौ

### १—वैश्वदेवीष्टिः प्रथमं पर्व ।

पय एवान्नम् यः प्रजाकामः स एतेन हविषा यजते ॥ १ ॥ स वा आग्नेयो-ऽष्टाकपालः पुरोडाशो भवति । अथ सौम्यश्चरुर्भवति । अथ सावित्रो द्वादशकपालोवाष्टा-कपालो वा पुरोडाशो भवति । अथ सारस्वतश्चरुर्भवति पौष्णश्चरुः ॥ एतानि पञ्च हवींषि भवन्ति ॥ अथातः पयस्यायाएवायतनम् ॥ मारुतः सप्तकपालः पुरोडाशो भवति ॥ तं वेस्वतवोभ्य इति कुर्य्यात् ॥ अथातः पयस्यैव वैश्वदेवी भवति ॥ अथ द्यावापृथिव्य एक कपालः पुरोडाशो भवति ॥ अथात आवृदेव, नोपकिरन्त्युत्तरवेदिम् ॥ त्रेधावर्हिः संनद्धं भवति तत्पुनरेकधा । प्रस्वउपसनद्धा भवन्ति । तं प्रस्तरं गृह्णाति । ह्यासाद्य हवींष्यग्निं मन्थन्ति ॥ नव प्रयाजं भवति नवानुयाजम् । त्रीणि समिष्टयजूंषि भवन्ति ॥ तस्य प्रथमजो गौर्दक्षिणा ॥

### २—अथ वरुणप्रघासो द्वितीयं पर्व ।

( आवृत् )—वरुण प्रघासैश्चतुर्थे मासि यजते । द्वे वेदी द्वावग्नी भवतः । स उत्तरस्यामेववेदौ उत्तरवेदिमुपकिरति न दक्षिणस्याम् । अथैतान्येव पञ्चहवींषि भवन्ति अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । उभयत्र पयस्ये भवतः । वारुण्युत्तरा भवति,मारुती दक्षिणा । तयोरुभयोरेव करीराण्यावपति । तयोरुभयोरेव शमीपलाशा-न्यावपति ॥ अथ काय एक कपालः पुरोडाशो भवति ॥

( अङ्गकर्म )—अथ पूर्वेद्युरन्वाहार्य्यपचनेऽतुषानिव यवान् कृत्वा नानीषदिवोप-तप्य तेषां करम्भपात्राणि कुर्वन्ति यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि ॥ तत्रापि-मेषं च मेषीं च कुर्वन्ति । तयोर्मेषे च मेष्यां च यद्यनैडकोरुर्णा विन्देत् ताः प्रणिज्य-निश्लेषयेत् यद्यु अनैडकोर्न विन्देद्—अथो अपि कुशोर्णा एवस्युः ॥ यवमयौ भवतः । स उत्तरस्यामेव पयस्यायां मेषीमवदधाति॥दक्षिणस्या मेषम् । स सर्वाण्येव हवींष्यध्वर्यु-रुत्तरस्यां वेदावासादयति । अथैतामेव पयस्यां प्रतिप्रस्थाता दक्षिणस्यां वेदावासादयति । आसाद्यहवींष्यग्निमन्थति । अग्निमन्थित्वाऽनुप्रहृत्याजुहोति ॥

( प्रयाजाः ६ )—अथाध्वर्युरेवाह—"अग्नये समिध्यमानानुब्रूहि"—इति । ता उभावेवेध्मावभ्याधत्तः, उभौ समिधौ परिशिष्टः, उभौ पूर्वा वाघारावघारयतः ॥ अथा-ध्वर्य्युरेवाह—"अग्निमग्नीत् संमृड्ढि"—इति । असंमृष्टमेव भवति संप्रेषितम ॥ अथ

प्रतिप्रस्थाता प्रतिपरैति । स पत्नीमुदानेष्यन् पृच्छति—'केन चिरसि"—इति । सा यन्न प्रतिजानीत्-ज्ञातिभ्यो ह्यस्यै तदहितं स्यात् ॥ तां वाचयति—"प्रघासिनो हवामहे मरुतश्चरिशादसः करम्भेण सजोषसः"—इति ॥ एतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति । तानि वै प्रतिपुरुषं पात्राणि भवन्ति यवमयानि भवन्ति । शूर्पेण जुहोति । पत्नीं जुहोति ॥ पुरायज्ञात् पुराहुतिभ्यो जुहोति ॥ स वै दक्षिणेऽग्नौ जुहोति ॥ अथैन्द्रीं-मरुत्वतीं जपति । — "मोषूणइन्द्रात्र पृत्सुदेवैरस्ति हिष्माते शुष्मिन्नवयाः । महश्चिद्‌ यस्य मढुषो यव्या हविष्मतो मरुतो वन्दतेगीः"—इति ॥ अथैनां वाचयति—"अक्रन् कर्म्म कर्मकृतः सहवाचामयोभुवा । देवेभ्यः कर्मकृत्वाऽस्तंप्रेत सचाभुवः"—इति ॥ प्रतिपराणीयोदैति प्रति प्रस्थाता । संमृजन्त्यग्निम् । संमृष्टेऽग्नौ ता उभावेवोत्तरावाघारा वा घारयतः । अथाध्वर्य्युरेवाश्राव्यहोतार प्रवृणीते । प्रवृत्तो होतोत्तरस्यै वेदेर्होतृषदने उपविशति । उपविश्य प्रसौति । ता उभावेव प्रसूतौ स्रुच आदायातिक्रामतः । अति-क्राम्याश्राव्याध्वर्युरेवाह—"समिधोयज" - इति । यजयजेति चतुर्थेचतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥

( प्रधानम् )—अथाध्वर्य्युरेवाह—"अग्नयेऽनुब्रूहि"—इति ॥

आज्यभागम् ता उभावेव चतुराज्यस्यावदायातिक्रामतः॥अतिक्रम्या श्राव्याध्वर्य्युरेवाह ।

१—आग्नेयाज्यभागः—'अग्नियज'—इति ता उभावेववषट् कृते जुहुतः ॥ १ ॥

अथाध्वर्य्युरेवाह - २ — सौमाज्यभागः — 'सोमायानुब्रूहि' — इति सौम्य-माज्यभागम् । ता उभावेव चतुराज्यस्या वदायातिक्रामतः । अतिक्राम्याश्राव्याध्वर्य्युरेवाह 'सोमंयज'—इति । ता उभावेव वषट् कृते जुहुतः ॥ २ ॥ तद् यत्किञ्च वाचाकर्तव्य, मध्वर्य्युरेव तत्करोति न प्रतिप्रस्थाता । तद् यदध्वर्य्युरेवाश्रावयति इहैव यत्रवषट् क्रियते कृतानुकरएव प्रतिप्रस्थाता ॥ पाणावेव प्रतिप्रस्थाता स्रुचौ कृत्वोपास्ते ॥

अथाध्वर्य्युरेवैतैर्हविर्भिः प्रचरति—आग्नेयेन[१]ष्टाकपालेन पुरोडाशेन सौम्येन[२] चरुणा सावित्रेण[३] द्वादशकपालेन वाष्टाकपालेन वा पुरोडाशेन सारस्वतेन[४] चरुणा पौष्णेन[५] चरुणा, ऐन्द्राग्नेन[६] द्वादशकपालेन पुरोडाशेन ॥

१—मारुतं मेष वारुण्याम्—अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः ॥ २—वारुणीं मेषीं मारुत्याम्—स यो मेषो भवति मारुत्यां, तं वारुण्यामवदधाति । या मेषी भवति वारुण्यां, तां मारुत्यामवदधाति ॥

---

१—अग्नेः । २—सोमस्य । ३—सवितुः । ४—सरस्वत्याः । ५—पूष्णः । ६—ऐन्द्राग्न्योः ।

१—वारुणीपयस्या—'अथाध्वर्युरेवाह वरुणायानुब्रूहि'–इति । स उपस्तृणीते आज्यम् अथास्यै वारुण्यै पयस्यायै द्विरवद्यति । सोऽन्यतरेणावदानेन सह मेषमवदधाति । अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्ति अवदाने, अतिक्रामति । अथाध्वर्युरेवाश्राव्याह—'वरुणं यज'—इति । वषट् कृते जुहोति ॥ सव्येपाणावध्वर्युः स्रुचां कृत्वा दक्षिणेन प्रतिप्रस्थातुर्वासोऽन्वारभ्याह—'मरुद्भ्योऽनुब्रूहि'—इति । उपस्तृणीते आज्यं प्रतिप्रस्थाता ॥ २—मारुतीपयस्या—अथास्यै मारुत्यै पयस्यायै द्विरवद्यति । सोऽन्यतरेणावदानेन सह मेष मवदधाति अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्ति अवदानेन अतिक्रामति । अथाध्वर्युरेवाश्राव्याह—'मरुतोयज'—इति ॥ वषट् कृते जुहोति ॥ २ ॥

स्विष्टकृत्—अथाध्वर्युरेव कायेनैककपालेन पुरोडाशेन प्रचरति । प्रचर्याध्वर्युरेवाह—'अग्नये स्विष्टकृतेऽनुब्रूहि'—इति ससर्वेषामेव हविषामध्वर्युः सकृत् सकृदवद्यति । अथैतस्या एव पयस्यायै प्रति प्रस्थाता सकृदवद्यति अथोपरिष्टाद्विराजस्याभिधारयतः । ता उभावेवातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह–'अग्निं स्विष्टकृतं यज'–इति । ता उभावेव वषट् कृते जुहुतः ।

भागहरणम्—अथाध्वर्युरेव प्राशित्रमवद्यति । इडां समवदाय प्रति प्रस्थात्रेऽनि प्रजिहीते । तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्यति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति । उपहूयमार्जयन्ते ॥

अनुयाजाः ६—अथाध्वर्युरेवाह—"ब्रह्मन् प्रस्थास्यामि , समिधमाधायाग्निमग्नीत संमृड्ढि"—इति । स स्रुचोरेवाध्वर्युः पृषदाज्यं व्यानयते । अथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवति तत् स द्वेधा व्यानयते । उतो तत्र पृषदाज्यं न भवति स यदेवोपभृत्याज्यं तत् स द्वेधाव्यानयते । ता उभावेवातिक्रामतः । अतिक्रम्या श्राव्याध्वर्युरेवाह—'देवान् यज'—इति । यजयजेति चतुर्थे चतुर्थेऽनुयाजे समानयमानौ नवभिरनुयाजैश्चरतः ॥

प्रतिपत्तिः—ता उभावेव सादयित्वा स्रुचोव्यूहतः । स्रुचोव्युह्यपरिधीन् समज्य परिधिमभिपद्याश्राव्याध्वर्युरेवाह—"इषितादैव्याहोतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय"—इति । सूक्तवाकं होताप्रतिपद्यते । अथैता उभावेव प्रस्तरौ समुल्लुम्पतः । उभावनुप्रहरतः । उभौतृणे अपगृह्योपासाते । यदा होता सूक्तवाकमाह,—अथाग्नीदाह—'अनुप्रहर'—इति । ता उभावेवाप्रहरतः । उभावात्माना उपस्पृशेते ॥ अथाह—'संवदस्व'—इति । अगानग्नीत्' 'अगन्' । 'श्रावय', श्रौषट्' । स्वगादैव्या होतृभ्यः

स्वस्तिर्मानुषेभ्यः । शंयोर्ब्रूहीत्यध्वर्य्युरेवैतदाह । ता उभावेव परिधीननुप्रहरतः । उभौ स्रुचः संप्रगृह्यस्फ्ये सादयतः ॥

पत्नीसंयाजः—अथाध्वर्य्युरेव प्रतिपरेत्यपत्नीः संयाजयति, उपास्त एव प्रतिप्रस्थाता । पत्नीः संयाज्यो दैत्यध्वर्य्युः ॥

समिष्टयजुः—त्रीणि समिष्ट यजूंषि जुहोति । तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति ॥ तद् ये वैश्वदेवेन यजमानयोर्वाससी प्ररिहिते स्यातां ते एवात्रापि स्याताम् ॥ अथास्यै वारुण्यै पयस्यायै क्षामकर्ष मिश्रमादायावभृथं यन्ति, तत्र न सामगीयते । तूष्णीमेवेत्याभ्यवेत्योपमारयति ॥ कामं हैते यस्मै कामयेत तस्मै दद्यात् । न हि दीक्षितवसने भवतः ॥ अथ केशश्मश्रूप्त्वा समारोह्याग्नी उद्वसायेव ह्यतेन यजते । गृहनित्वा निर्मथ्याग्नी पौर्णमासेन यजते ॥

३—साकमेधः कार्तिक्याम् ।

अथैतैः साकमेधैश्चतुर्थे । १—अनीकवदग्नीष्टिः—मासियजते । सर्वैद्वयहमनूचीनाहं यजते ॥ स पूर्वे द्युरग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपति ॥

२—सांतपनमरुदिष्टिः—अथ मरुद्भ्यः सांतपनेभ्यो मध्यन्दिने चरुं निर्वपति ॥

३—४—गृहमेधिमरुदिष्टिः—अथ मरुद्भ्यो गृहमेधिभ्यः । शाखयावत्सानपाकृत्य पवित्रवति संदोह्य तं चरुं श्रपयति । क्षीरौदनौ भवति ॥ तस्यावृत् ॥

सैवस्तीर्णा वेदिर्भवति या मरुद्भ्यः सांतपनेभ्यः ॥ तस्यामेवस्तीर्णायां वेदौ परिधीश्च शकलांश्चोपनिदधति । तथा संदोह्य चरुं श्रपयति । श्रपयित्वाऽभिधार्य्योद्वासयति ॥ अथ द्वेपिशीलेवा पात्र्यौ वा निर्णेनिजति । तयोरेनं द्वेधोद्धरन्ति । तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिश्चति । स्रुवं च स्रुचं च संमाष्टि । अथैता ओदनावादायोदैति । स्रुवं च स्रुचं चादायोदैति । स इमामेवस्तीर्णां वेदिमभिमृश्य परिधीन् परिधायग्यावतः शकलान् कामयते तावतोऽभ्यादधाति । अथैता ओदनावासादयति स्रुवं च स्रुचं चासादयति । उपविशति होता होतृषदने, स्रुवं च स्रुचं चाददान आह ।

आग्नेयः आज्यभागः—"अग्नयेऽनुब्रूहि"—इति आग्नेयमाज्यभागम् ॥ सदक्षिणस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामति । अतिक्रम्याश्राव्याह— अग्निंयज' इति । वषट् कृते जुहोति ॥

सौम्याज्यभागः—अथाह—'सोमायानुब्रूहि' — इति सौम्यमाज्यभागम् । स उत्तरस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामति । अतिक्रम्या श्राव्याह— 'सोमंयज'—इति वषट् कृते जुहोति ॥

प्रधानम्—अथाह—"मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि"—इति । स दक्षिणस्यौदनस्य सर्पिरासेचनात् हत आज्यमुपस्तृणीते तस्य द्विरवद्यति । अथोपरिष्टादाज्यस्या—

भिधारयति । अतिक्रामति । अतिक्रम्या श्राव्याह—'मरुतोगृहमेधिनो यज'—इति । वषट् कृते जुहोति ॥ अथाह—'अग्नयेस्विष्टकृतेऽनुब्रूहि'—इति । स उत्तरस्यौदनस्य सर्पिरासेचनान् तत आज्यमुपस्तृणीते । तस्य द्विरवद्यति । अथोपरिष्टादाज्यस्याभिधारयति । अतिक्रामति । अतिक्रम्याश्राव्याह ॥

स्विष्टकृत्—'अग्निंस्विष्टकृतं यज'—इति । वषट् कृते जुहोति ॥

भागहरणम्—अथेडामेवावद्यतिन प्राशित्रम्॥ उपहूयमार्जयन्ते ॥ एतन्न्वेकमयनम्॥

४—गृहमेधि-मरुदिष्टिः ।

अङ्गकर्म—अथेदं द्वितीयम् । सैवस्त्रीर्णावेदिर्भवति यामरुद्भ्यः सांतपनेभ्यः । तस्यामेवस्तीर्णायां वेदौ परिधीश्च शकलांश्चोपनिदधाति । तथा संदोह्य चरु श्रपयति । नेदेव प्रतिवेशमाज्यधिश्रयति ! श्रपयित्वाऽभिधार्योद्वास्यानक्ति । स्थाल्यामाज्यमुद्वासयति । स्रुवं च स्रुचं च संमार्ष्टि । अथैतं सोखमेव चरुमादायोदैति । स्थाल्यामाज्यमादायोदैति । स्रुवं च स्रुचं चादायोदैति । स इमामेवस्तीर्णां वेदिमभिमृश्य परिधीन् परिधाय यावतः शकलान् कामयते तावतोऽभ्या दधाति । अथैतं सोखमेव चरुमासादयति । स्थाल्यामाज्यमासादयति । स्रुवं च स्रुचं चासादयति । उपविशति होता होतृषदने, स्रुवं च स्रुचं चाददान आह ॥

आग्नेय आज्यभागम्—'अग्नयेऽनुब्रूहि'—इति आग्नेयमाज्यभागम् । स स्थाल्यै चतुराज्यस्यावदायातिक्रामति । अतिक्रम्या श्राव्याह—'अग्निंयज'—इति । वषट् कृते जुहोति ॥

सौम्य आज्यभागम्—अथाह—'सोमायानुब्रूहि'—इति सौम्यमाज्यभागम । स स्थाल्या एव चतुराज्यस्यावदायातिक्रामति । अतिक्रम्या श्राव्याह—'सोमंयज'—इति । वषट् कृते जुहोति ॥

प्रधानम्—अथाह—'मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि'—इति । स उपस्तृणीते आज्यम् । अथास्य चरोर्द्विरवद्यति । अदोपरिष्टादाज्यस्याभिघारयति। प्रत्यनक्ति, अवदाने अतिक्रामति । अतिक्रम्या श्राव्याह—'मरुतोगृहमेधिनो यज'—इति । बषट् कृते जुहोति ॥

स्विष्टकृत्—अथाह—'अग्नये स्विष्टकृतेऽनुब्रूहि'—इति । स उपस्तृणीते आज्यम्। अथास्यचरोः सकृदवद्यति । अथोपरिष्टाद्विराज्यस्याभिघारयति । न प्रत्यनक्त्यवदानम् । भागहरणम्—अतिक्रामति । अतिक्रम्या श्राव्याह—'अग्निं स्विष्टकृतं यज'—इति । वषट् कृते जुहोति ॥

अथेडामेवावद्यति न प्राशित्रम्। उपहूय प्राश्नन्ति। यावन्तो गृह्या विरुच्छि-ष्टाशाः स्युस्तावन्तः प्राश्नीयुः अथोऽप्यृत्विजः प्राश्नीयुः। अथो अप्यन्ये ब्राह्मणाः प्राश्नीयुर्यदि बहुरोदनः स्यात्।

५—पूर्णदर्वीष्टिः।

अथैता मनिरशितां कुम्भीमपिधाय निदधाति पूर्णदर्व्याय। मातृभिर्वत्सान् समवार्जन्ति। यवाग्वैतां रात्रिमग्निहोत्रं जुहोति। निवान्यां प्रातर्दुहन्ति पितृयज्ञाय। अथ प्रातर्हुतेवाऽहुते वा यतरथा कामयेत सोऽस्या अनिरशितायै कुम्भै दर्व्यौपहन्ति।

"पूर्णादर्विपरापत, सुपूर्णापुनरापत। वस्नेव विक्रीणावहाइषमूर्जं शतक्रते" इति। एतयैवैनमेतस्मै भागाय ह्वयति॥ अथ ऋषभमाह्वयितवैब्रूयात्। स यदि रुयात् स वषट्कार इत्युहैक आहुः। तस्मिन् वषट्कारे जुहुयात्। यद्युनरुयात्, ब्राह्मण एव दक्षिणत आसीनो ब्रूयाद्—'जुहुधि'-इति। ततो जुहुयात्॥

६—क्रीडिमरुदिष्टिः।

अथ मरुद्भ्यः क्रीडिभ्यः सप्तकपालं पुरोडाशं निर्वपति॥

७—महाहविष्टेष्टिः।

अथातो महा हविष एव। तस्यावृत्। उपकिरन्त्युत्तरवेदिम्। गृह्णन्ति पृषदाज्यम्। मन्थन्त्यग्निम्। नवप्रयाजं भवति, नवानुयाजम्। त्रीणि समिष्टयजुंषि भवन्ति॥

अथैतान्येव पञ्चहवींषि भवन्ति। आग्नेयो[1]ऽष्टाकपालः पुरोडाशो भवति। अथ सौम्य[2]श्चरुर्भवति। अथ सावित्रो[3] द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो भवति। अथ सारस्वत[4]श्चरुर्भवति। अथ पौष्ण[5]श्चरुर्भवति।

अथैन्द्राग्नो[6] द्वादशकपालः पुरोडाशो भवति। अथ माहेन्द्र[7]श्चरुर्भवति। अथ वैश्वकर्मण[8] एक कपालः पुरोडाशो भवति॥

---

१ अग्निः। २ सोमः। ३ सविता। ४ सरस्वती। ५ पूषा।
६ ऐन्द्राग्नः। ७ माहेन्द्रः। ८ वैश्वकर्मणः।

८—पित्र्येष्टिः ।

अथ पितृयज्ञेन यजते । स पितृभ्यः सोमवद्भ्यः षट्कपालं पुरोडाशं निर्वपति । सोमाय वा पितृमते ॥ अथ पितृभ्यो बर्हिषभ्यः अन्वाहार्य्यपचने धानाः कुर्वन्ति । ततोऽर्धाः पिंषन्ति । अर्द्धा इत्येत्रधाना अपिष्टा भवन्ति । ता धानाः पितृभ्यो बर्हिषद्भ्यः ॥ अथ पितृभ्योऽग्निष्वात्तेभ्यः निवान्यायै दुग्धे सकृदुपमथितः एक शलाकयामन्थो भवति ॥ स जघनेन गार्हपत्यं प्रचीनावीतीभूत्वा दक्षिणासीन एतं षट्कपालं पुरोडाशं गृह्णाति । स तत एवो पोत्थायोत्तरेणान्वाहार्य्यपचनं दक्षिणां तिष्ठन्नवहन्ति । सकृत् फलीकरोति ॥ स दक्षिणैव दृषदुपले उपदधाति । दक्षिणार्द्धे गार्हपत्यस्य षट् कपालान्युपदधाति ॥ अथ दक्षिणेनान्वाहार्य्यपचनं चतुः स्रक्तिं वेदिं करोति, अवान्तरदिशोऽनुस्रक्तो करोति । तन्मध्येऽग्निं समादधाति । प्राङ् तिष्ठन् जुहोति ॥ स तत एव प्राक् स्तम्ब यजुर्हरति । स्तम्ब यजुर्हृत्वा अथेत्येवाग्रे परिगृह्णाति । अथेत्यथेति पूर्वेण परिग्रहेण परिगृह्य लिखति । हरति यद्धार्य्यं भवति । स तथैवोत्तरेण परिगृहेण परिगृह्णाति । उत्तरेण परिग्रहेण परिगृह्य प्रतिमृज्याह—'प्रोक्षणीरासादय'—इति । आसादयन्ति प्रोक्षणीः ॥ इध्मं बर्हिरुपसादयन्ति । स्रुचः संमार्ष्टि । आज्येनोदैति । स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति ॥ तदाहुः—'द्विरूपभृति गृह्णीयात्'—इति । तद्वष्टावेवकृत्व उपभृति गृह्णीयात् ॥ आज्यानि गृहीत्वा स पुनः प्राचीनावीती भूत्वा प्रोक्षणीरध्वर्य्युरादत्ते स इध्ममेवाग्रे प्रोक्षति । अथ वेदिम् । अथास्मैर्बर्हिः प्रयच्छन्ति । तत् पुरस्ताद्ग्रन्थ्यासादयति । तत् प्रोक्ष्योपनिनीय विस्रंस्य ग्रन्थिं न प्रस्तरं गृह्णाति । अथ संनहनमनु विस्रंस्यापसलविभिः परिस्तृणन् पर्य्येति । सोऽपसलविभिः परिस्तीर्य्य यावत् प्रस्तरभाजनम् तावत् परिशिनष्टि । अथ पुनः प्रसलविभिः पर्य्येति ॥ स दक्षिणैव परिधीन् परिदधाति । दक्षिणा प्रस्तरं स्तृणाति । नान्तर्दधाति विधृती । स तत्र जुहूमासादयति । अथ पूर्वामुपभृतम् । अथ ध्रुवाम् । अथ पुरोडाशम् । अथ धानाः । अथ मन्थम् । आसाद्यहवींषि संमृशति ॥ ते सर्व एव यज्ञोपवीतिनो भूत्वा इत्थाद् यजमानश्च ब्रह्मा च पश्चात् परीतः पुरस्तादग्नीत् ॥ तेनोपांशुचरन्ति ॥ परिवृतेचरन्ति ॥

अथेध्ममभ्यादधदाह—'अग्नयेसमिध्यमानायानुब्रूहि' — इति ॥ स एकामेव होता सामिधेनीं त्रिरन्वाह । —

उशन्तस्त्वानिधीमहि, उशन्तः समिधीमहि ।
उशन्नुशत आवह पितृन् हविषे अत्तवे ॥ १ ॥

'अथाग्निमावह । सोममावह । पितॄन् सोमवत आवह । पितॄन् बर्हिषद आवह । पितॄनग्निष्वातानावह । देवाँ ३ आज्ययाँ ३ आवह । अग्निंहोत्रायावह । स्वं महिमान-

भावह" इत्यात्राह्योपविशति ॥ अथाश्राव्य न होतारं प्रवृणीते । 'सीदहोतरित्येवाह' ॥ उपविशति होता होतृषदने । उपविश्य प्रसौति। प्रसूतोऽध्वर्य्यु स्रुचावादाय प्रत्यङ्ङति-क्रामति। अतिक्रम्याश्राव्याह—'समिधोयज'—इति । सोऽपबर्हिषश्चतुरः प्रयाजान् यजति ॥

अथाज्यभागाभ्यां चरन्ति । आज्यभागाभ्यां चरित्वा ते सर्व एव प्राचीनावीतिनो भूत्वा एतैर्वै हविर्भिः प्रचरिष्यन्त इत्थाद् यजमानश्च ब्रह्माच पुरस्तात् परीतः पश्चा-दग्नीत् ॥ न्दुताश्रावयन्ति—'ओं स्वधा'—इति । 'अस्तु स्वधा'—इति प्रत्याश्रावणम्। 'स्वधानम'—इति वषट्कारः ॥ तदुहोवाचासुरिः । आश्रावयेयुरेव प्रत्याश्रावयेयुर्वषट् कुर्य्युरिति ॥

अथाह—'पितृभ्यः सोमवद्भ्योऽनुब्रूहि'—इति । सोमाय वा पितृमते ॥ सद्वे पुरो-नुवाक्ये अन्वाह ॥ स उपस्तृणीते आज्यम् । अथास्य पुरोडाशस्यावद्यति । स तेनैव सह धानानां, तेन सह मन्थस्य । तत् सकृदवदधाति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति । प्रत्यनक्त्यवदानानि । नातिक्रामति । इत एवोपोत्थायाश्राव्याह—'पितॄन् सोमवतो यज'—इति वषट् कृते जुहोति ॥

अथाह—'पितृभ्यो बर्हिषद्भ्योऽनुब्रूहि'—इति ॥ स उपस्तृणीत आज्यम् । अथासां धानानामवद्यति । स ते नैव सह मन्थस्य । तेन सह पुरोडाशस्य । तत् सकृदवदधाति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामति । इत एवोपो-त्थायाश्राव्याह—'पितॄन् बर्हिषदो यज'—इति । वषट् कृते जुहोति ॥

अथाह—"पितृभ्योऽग्निष्वात्तेभ्योऽनुब्रूहि"—इति । स उपस्तृणीते आज्यम् । अथास्य मन्थस्यावद्यति । स तेनैव सह पुरोडाशस्य, तेन धानानाम् । तत् सकृदव-दधाति । अथोपरिष्टाद् द्विराजस्याभिघारयति प्रत्यनक्त्यवदानानि नातिक्रामति । इत एवो पोत्थायाश्राव्याह—'पितॄनग्निष्वातान यज'—इति ॥ वषट कृते जुहोति ॥

अथाह—"आग्नये कव्यवाहनायानुब्रूहि"—इति ॥ तत् स्विष्टकृते ॥ स उपस्तृ-णीते आज्यम् । अथास्य पुरोडाशस्यावद्यति । स ते नैव सह धानानां, तेन सह मन्थस्य। तत् सकृदवदधाति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति ॥ न प्रत्यनक्त्यवदानानि ॥ नातिक्रामति ॥ इत एवोपोत्थायाश्राव्याह—'अग्निं कव्यवाहनं यज'—इति । वषट् कृते जुहोति ॥

तद्धैके एतमेव होत्रे मन्थमादधति । तं होतोप यहूयावैव जिघ्रति । तं ब्रह्मणे प्रयच्छति ॥ तं ब्रह्मावैव जिघ्रति । तमग्नीधे प्रयच्छति ॥ तमग्नीदवैव जिघ्रति ॥ तामु-

पहूयावैव जिघ्रन्ति न प्राश्नन्ति । "प्राशितव्यं त्वेव वयं मन्यामहे"-इति हस्माहासुरिः । यस्य कस्यचाग्नौ जुह्वतीति ॥ अथयतरो दास्यन भवति यद्यध्वर्य्युर्वा यजमानो वा स उदपात्रमादायापसलवि त्रिः परिषिञ्चन् पर्य्येति ॥ स यजमानस्य पितरमवनेजयति ॥ अथास्य पुरोडाशस्यावदाय सव्ये पाणौ कुरुते । धानानामवदाय सव्ये पाणौ कुरुते । मन्थस्यावदाय सव्ये पाणौ कुरुते ॥ स येमामवान्तर दिशमनु स्रक्तिस्तस्या यजमानस्य पित्रे ददाति, तस्यां पितामहाय ददाति, तस्यां प्रपितामहाय ददाति । तस्यां निमृष्टे ॥ ते सर्व एव यज्ञोपवीतिनो भूत्वा उदञ्च उपनिष्क्रम्याहवनीयमुपतिष्ठन्ते । अथ प्रतिपरेत्यगार्हपत्यमुपतिष्ठन्ते ॥ अथ यतरो ददाति स पुनः प्राचीनावीती भूत्वाभिप्रपद्य जपति—'अमीमदन्तपितरो यथाभागमावृषामिषत'-इति ॥ अथोदपात्रमादाय पुनः प्रसलवि त्रिः परिषिञ्चन् पर्य्येति । सजयमानस्य पितरमवने जयति ॥ अथ नीविमु-दूह्यनमस्करोति षट् कृत्वो नमस्करोति ॥

ते सर्व एव यज्ञोपवीतिनो भूत्वा अनुयाजाभ्यां प्रचरिष्यन्त इत्थाद् यजमानश्च ब्रह्मा च पश्चात् परीतः, पुरस्तादग्नीदुपविशति, होता होतृषदने ॥ अथाह—"ब्रह्मन् प्रस्थास्यामि, समिधमाधायाग्निमग्नीत् संमृड्ढि"-इति। स्रुचावादाय प्रत्यङ्ङतिक्रामति। अतिक्रम्याश्राव्याह—'देवान् यज'—इति । सोऽपबर्हिषौ द्वावनुयाजौ यजति ॥

अथ सादयित्वा स्रुचौव्यूहति । स्रुचौव्युह्य, परिधीन् समृज्य, परिधि मभिपद्या श्राव्याह—"इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय"—इति । सूक्तवाकं होताप्रतिपद्यते । नाध्वर्य्युः प्रस्तरं समुल्लुम्पति, इत्येवोपास्ते यदा होता सूक्त-वाकमाह ॥ अथाग्नीदाह—'अनुप्रहर'—इति । सनकिञ्चनानु प्रहरति, तूष्णीमेवात्मा-नमुपस्पृशति ॥ अथाह—'संवदस्व'—इति । अगानग्नीत्, अगन् । 'श्रावय' 'श्रौषट्' । स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि'—इति । उपस्पृशत्येव परिधीन्नानु प्रहरति । अथैतद्बर्हिरनुसमस्यति परिधींश्च ॥ तद्धैके हविरुच्छिष्टमनु समस्यन्ति तदु तथा न कुर्य्यात् ॥ अपोवैवाभ्यहरेयुः प्राश्नीयुर्वा ॥

६—त्र्यम्बकयागः ।

त्र्यम्बकैर्यजते । ते वै रौद्रा भवन्ति । एक कपाला भवन्ति । ते वै प्रतिपुरुषम् । यावन्तोगृह्याः स्युस्तावन्त एकेनातिरिक्ता भवन्ति ॥ स जघनेन गार्हपत्य यज्ञोपवीती भूत्वो-दङ्ङासीन एतान् गृह्णाति । स तत एवोपोत्थायोदङ् तिष्ठन्नवहन्ति । उदीच्यौदपदुपले उपदधाति । उत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति । ते वा अक्ताःस्युः । त उ वा अनक्ता एव स्युः । तान् सार्द्धं पात्र्यां समुद्वास्यान्वाहार्य्यपचनादुल्मुकमादयोदङ् परेत्य जुहोति॥

पथि जुहोति ॥ चतुष्पथे जुहोति ॥ पलाशस्य पलाशेन मध्यमेन जुहोति ॥ स सर्वेषामेवावद्यति-एकस्यैवनावद्यति य एषोऽतिरिक्तो भवति ॥ अथ य एष एकोऽतिरिक्तो भवति तमाखूत्करे उपकिरति । अथ पुनरेत्य जपन्ति—"अवरुद्रमदेमहि अव देवं त्र्यम्बकम् । यथानो वस्यसस्करद्, यथानः श्रेयसस्करत्, यथानो व्यवसाययात् ॥ भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजं सुप्त्वं मेषाय मेष्यै"—इति ॥ अथापसलवि त्रिः परियन्ति सव्यानूरूनुपाघ्नानाः ॥ "त्र्यम्बकं यजामहे सुगन्धिपुष्टिवर्द्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय माऽमृतात्"—इति ॥

तदुहापिकुमार्य्यः परीयुः—"भागस्य भजामहै"—इति ॥ तासामुतासां मन्त्रोऽस्ति—"त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिवबन्धनादितो मुक्षीय मामुतः"—इति ॥ अथ पुनः प्रसलवि त्रिः परियन्ति दक्षिणानूरूनुपाघ्नाना एते नैव मन्त्रेण ॥

अथैतान् यजमानोऽञ्जलौ समाप्य ऊर्ध्वानुदस्यति यथा गौर्नोदाप्नुयात् । तान् विलिप्सन्त उपस्पृशन्ति । तान् द्वयोर्मूतकयोरुपनह्य वेणुयष्ट्यां वा कुपेवोभयत आवध्योदङ् परेत्य यदि वृक्षं वा स्थाणुं वा वल्मीकं वा विंदेत् तस्मिन्नासजति ॥ अथ दक्षिणान् बाहूनन्वावर्तन्ते, तेप्रतीक्षं पुनरायन्ति । पुनरेत्याय उपस्पृशन्ति ॥

अथ केशश्मश्रुप्त्वा समारोह्याग्ना उदवसायेव ह्येतेन यजते । गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजते ॥

१०—शुनासीरीययागः ।

शुनासीर्य्येण यजेत । तस्यावृत् । नोपकिरन्त्युत्तरवेदिम् । न गृह्णन्ति पृषदाज्यम् । न मन्थन्त्यग्निम् । पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजाः । एकं समिष्टयजुः ॥ अथैतान्येव पञ्चहवींषि भवन्ति ॥ अथ शुनासीर्यो द्वादशकपालः पुरोडाशो भवति ॥ अथ वायव्यं पयो भवति ॥ अथ सौर्य्य एक कपालः पुरोडाशो भवति ॥ तस्याश्वः श्वेतो दक्षिणा ॥ यद्यश्वं श्वेतं न विन्देद् अपि गौरवे श्वेतः स्यात् ॥ स यत्रैव साकमेधैर्यजते तच्छुनासीर्य्येण यजेत । ( यद्वै त्रिः संवत्सरस्य यजते तेनैव संवत्सर माप्नोति तस्माद् यदैव कदा चैतेन यजेत ॥ तद्वैके रात्रीरापिपयिषन्ति, स यदि रात्री रापिपयिषेत्, यददः पुरस्तात् फाल्गुन्यै पौर्णमास्या उद्दृष्टं तच्छुनासीर्य्येण यजेत ॥ अथ दीक्षेत तं नानींजानं पुनः फाल्गुनी पौर्णमास्यभि पर्य्येयात् नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्ययदितिनूत्सृजमानस्य ॥ अथ पुनः प्रयुञ्जानस्य पूर्वेद्युः फाल्गुन्यै

पौर्णमास्यै शुनसीर्य्येण यजेत । अथ प्रातर्वैश्वदेवेन । अथ पौर्णमासेनेति ॥ अथ स वै परिवर्तयेत ॥ तदुह्योवाचासुरिः—नाद्रियेत परिवर्तयितुमिति ॥

वैश्वदेवेन यजमानोऽग्निर्भवति, वरुणप्रघासैर्वरुणः, साकमेधैरिन्द्रः, तदाहुः न चातुर्मास्ययाजिन मनुविन्दन्ति, परमं ह्येव खलु स स्थानं, परमांगतिं गच्छतीति ॥

॥ एतानि तु चातुर्मास्यानि ॥

॥ इति हविर्यज्ञः प्रथम प्रकरणम् समाप्तम् ॥



# अथ महायज्ञो द्वितीयं प्रकरणम् ।

## अथ सोमयज्ञाः ।

एकाहाःअहीनानि सत्राणीति सौम्य मखाः । तेष्वेकाहानां प्रकृतिर्ज्योतिष्टोमः ॥ स सप्तसंस्थः—

अग्निष्टोमः[१], अत्यग्निष्टोमः[२], उक्थस्तोमः[३], षोडशिस्तोमः[४], अतिरात्रस्तोमः[५], वाजपेयस्तोमः[६], आप्तोर्यामस्तोमः[७] - इति ॥ तत्राग्निष्टोमस्यावृत् प्रदर्श्यते—

अग्निष्टोमश्चतुष्टोमो ज्योतिष्टोमः षडङ्गकः ।
पौर्विकं[१] दीक्षणं[२] सोमः[३] प्रवर्ग्यं[४] च पशुर्[५]ग्रहः[६] ॥ १ ॥

### १—अथ अग्निष्टोमः ।

त्रिवृत्—पञ्चदश—सप्तदशै—कविंशैश्चतुर्भिः स्तोमैः ॥ स चतुष्टोमः । स ज्योतिष्टोमः ॥

### १—देवयजनक्लृप्तिः ।

देवयजनं जोषयन्ते । स यदेववर्षिष्ठंस्यात् तज्जोषयेरन्-यदन्यद् भूमेर्नाभिशयीत तद्वर्ष्म सत् समं स्यात् । समं सदविभ्रंशि स्यात् । अविभ्रंशि सत् प्राक्प्रवरणं-स्यात् । अथो उदक्प्रवरणम् । दक्षिणतः ऽत्युच्छ्रितमिवस्यात् ॥ न पुरस्ताद्देवयजनमात्र मतिरिच्येत । कामं ह ऽदक्षिणतः स्याद्-एवमुत्तरतः । देवयजनमात्रं पश्चात् परिशिष्यते इति नु देवयजनस्यक्लृप्तिः ॥ १ ॥ तत् सात्यज्ञोऽब्रवीत्-सर्वाबा इयं पृथिवी-देवी देवयजनम् । यत्र वा अस्यै क्च यजुषैव परिगृह्य याजयेदिति ॥२॥ ऋत्विजो हैव देवयजनम् । ये ब्राह्मणाः शुश्रुवांसोऽनूचाना विद्वांसो याजयन्ति सैवाऽह्वला । एतन्ने-दिष्ठतमामिव मन्यामहे इति ॥ ३ ॥

### २—शालाक्लृप्तिः ।

तच्छालो वा विमितं वा प्राचीनवंशं मिन्वन्ति । मानुषे उदीचीन वंशामेव शालाँ वा विमितं वा मिन्वन्ति । दीक्षितस्यैव प्राचीनवंशा नादीक्षितस्य ॥ तां वा एतां परि-श्रयन्ति ॥

### ३—शालायां दीक्षितोपचारः

तन्न सर्व इवा भिप्रपद्येत । ब्राह्मणोवैव राजन्यो वा वैश्यो वा ॥ स वै न सर्व-

रोव संवदेत । ब्राह्मणेन वैव राजन्येन वा वैश्येन वा । यद्येनं शुद्रेण संवादो विन्देद्-एतेषामेवैकं ब्रूयाद् इममिति विचद्वेति ॥ एष उ तत्र दीक्षितस्योपचारः ॥

४—शाला प्रवेशः ।

अथारणी पाणौ कृत्वा शालामभ्यवस्यति । स पूर्वार्द्ध्यं स्थूणा राजमभिपद्यैतद् यजुराह—"इदमगन्म देवयजनं पृथिव्या यत्र देवासोऽजुषन्तविश्वे"—ऋक्सामाभ्यां संतरन्तो यजुर्भिः रायस्पोषेण समिषा मदेम"—इति ॥

५—दीक्षा क्लृप्तिः ।

अपराह्णे दीक्षेत । पुराकेशश्मश्रोर्वपनाद् यत्कामयेत तदश्नीयात् । यद्वा संपद्येत । व्रतं ह्येवास्यातोऽशनं भवति । यद्यु नाशिशिषेद्—अपिकामंनाश्नीयात् ॥ अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधाति । तन्नापित उपतिष्ठते । तत् केशश्मश्रुच वपते नखानि च निकृन्तते । तद्धैके सर्व एववपन्ते । तदु तथा न कुर्य्यात् । स वै नखान्येवाग्रे निकृन्तेत । दक्षिणस्यैवाग्रे देवत्रा । सव्यस्य वा अग्रे मानुषे ॥ अङ्गुष्ठयोरेवाग्रे देवत्रा । कनिष्ठिकयोर्वाअग्रे मानुषे ॥ स दक्षिणमेवाग्रे गोदानं वितारयति देवत्रा । सव्यं वा अग्रे मानुषे ॥ स दक्षिणमेवाग्रे गोदानमभ्युनक्ति यजुषा । अथ दर्भतरुणकमन्तर्दधाति यजुषा । अथ क्षुरेणाभिनिदधातियजुषा । प्रच्छिद्योदपात्रे प्रास्यति तूष्णीमेवोत्तरं गोदानमभ्युनक्ति । तूष्णीं दर्भतरुणकमन्तर्दधाति । तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति ॥ अथ नापिताय क्षुरं प्रयच्छति । स यदा केशश्मश्रु वपति—अथस्नाति ॥ अथ प्राङ्ङिवोदङ्ङुत्क्रामति । अथ वासः परिधत्ते । तद्वाअहतं स्यात् । तद्वे निष्पेष्टवै ब्रूयात् । यद्यु अहतं स्यादद्भिरभ्युक्षेत् । अथो यदिदं स्नातवस्यं निहित मपल्पूलनकृतं भवति तेनोहापि दीक्षेत ॥ अथैनंशालां प्रपादयति । सधेन्वै चानडुहश्च नाश्नीयात् ॥

६—दीक्षितोपचारः ।

अथ प्रणीय आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति । तद्धैके आदित्येभ्यश्चरुं निर्वपन्ति तदस्ति पर्य्युदितमिव । अयं त्वेवाग्ना वैष्णवः प्रज्ञातः ॥ तस्य सप्तदश सामिधेन्यो भवन्ति । उपांशु देवते यजति । पञ्च प्रयाजा भवन्ति । त्रयोऽनुयाजाः । संयाजयन्ति पत्नीः । समिष्टयजुरेव न जुहोति ॥ अथाग्रेणा शालां तिष्ठन्नभ्यङ्क्ते । तद्धै-नवनीतं भवति । तमभ्यनक्ति शीर्षतोऽग्रे आपादाभ्यामनुलोमम् ॥ अथा क्ष्यावानक्ति ॥ त्रैककुदं भवति । यदि त्रैककुदं न विन्देद् अप्यत्रैककुदमेव स्यात् ॥ शरेषीकयानक्ति ।

सतूला भवति । स दक्षिणमेवाग्रे आनक्ति देवत्रा । सव्यं वा अग्रे मानुषे ।। स दक्षिणं सकृद् यजुषाऽनक्ति । सकृत् तूष्णीम् ।। अथोत्तरं सकृद् यजुषाऽनक्ति । द्विस्तूष्णीम् ।। अथैनं दर्भपवित्रेण पावयति । तद्वा एकं स्यात् । अथो अपि त्रीणिस्युः । अथोअपि सप्तस्युः त्रिः सप्तान्येव स्युः । एषैव संपत् ।। तं सप्तभिः पावयति ।। अथाशिषामारम्भं वाचयति । "आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामहे"—इति ।। अथाङ्गुलीर्न्यचति । द्वे द्वे द्वे इति मुष्टीकरोति ।। अत्रो वाचं यच्छति ।। अथैनं शालां प्रपादयति ।। सजघनेनाहवनीयमेति, अग्रेण गार्हपत्यम् । सोऽस्य संचरो भवत्या सुत्यायै ।। स तत्रैजतित्वत्, परित्वदा वर्त्तते ।।

## ७—होम क्लृप्तिः ।

सर्वाणि वै दीक्षाया यजूंष्यौद्ग्रभणानि तानि वैपञ्चजुहोति ।। ततो यानि त्रीणि स्रुवेण जुहोति तान्याधीत यजूंषीत्याचक्षते । संपद एव कामाय चतुर्थं हूयते । अथ यत् पञ्चमं स्रुचा जुहोति तदौद्ग्रभणंप्रत्यक्षम् । अनुष्टुभा तज्जुहोति ।। अथ यद् ध्रुवायामाज्यं परिशिष्टं भवति तज्जुह्वा मानयति, त्रिः स्रुवेणाज्यविलापन्या अधिजुह्वां गृह्णाति । यत् तृतीयं गृह्णाति तत् स्रुवमभिपूरयति ।। तदाहुः—एतावेवैकां जुहुयादिति तां वै यद्येकां जुहुयात् पूर्णांजुहुयात् । यत् स्रुवमभिपूरयति स्रुचं तदभि पूरयति तां पूर्णां जुहोति ।। अन्वे वैतदुच्यते—सर्वास्त्वेव हूयन्ते ।

## ८—कृष्णाजिनोपस्तरणम् ।

दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिने उपस्तृणाति । यदि द्वे भवतः संवद्धान्ते भवतः तद्यं समुते पश्चाद्भवतः ।। तयोरेनमधि दीक्षयति ।। यद्यु एकं भवति, अन्तकमुतर्हि पश्चात् प्रत्यस्येत् तदेनामधि दीक्षयति ।। अथ जघनेन कृष्णाजिने पश्चात् प्राङ् जान्वाक्न उपविशति । स यत्र शुक्लानां च कृष्णानां च सन्धिर्भवति तदेवमभिमृश्य जपति—"ऋक् सामयोः शिल्पे स्थस्तेवामारभेतेमापातमास्य यज्ञस्योदृचः"इति।।न्यक्नाङ्गुलिरिव भवति । अथ दक्षिणेन जानुना रोहति कृष्णाजिनम् । स वै जघनार्द्ध इवैवाग्र आसीत् । अथ मेखलां परिहरते । सा वै शाणी भवति । पषान्तरा वाससो भवति ।। सावै त्रिवृद् भवति । मुञ्जवल्शेनान्वस्ता भवति । स्तुकासर्गं सृष्टा भवति न प्रसलवि सृष्टा नो एवापसलवि सृष्टा ।। तां परिहरते ।। अथ नीविमुद्गुहते । अथ प्रोर्णुते । अथ कृष्णविषाणां सिचिवध्नीते । तां वा उत्तानामिव बध्नाति । अथ दक्षिणां भ्रुवमुपर्य्युपरिललाट मुपस्पृशति ।। अथोल्लिखति ।। अथ न दीक्षितः काष्ठेन वा नखेन वा कण्डूयेत् । कृष्णविषाणयैव कण्डूयेत नान्येन ।। अथास्मै दण्डं प्रपच्छति । औदुम्बरो भवति ।

मुखसंमितो भवति । तमुच्छ्रयति ॥ अत्रहैके—अङ्गुलीश्रन्यचन्ति । वाचं च यच्छन्ति । तदु तथा न कुर्य्यात् ॥ अमुत्रैवाङ्गुलीर्न्यचेदमुत्र वाचं यच्छेत् ॥ अथैक उद्वदति—"दीक्षितोऽयंब्राह्मणः" इति । त्रिः कृत्व आह । अपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात् ॥

वागयमन् विसर्जनयोरुपचारः ।

वाचं यच्छति । स वाचंयमआस्ते । आस्तामयात् । तामस्तमिते वाचं विसृजते । तद्धैके नक्षत्रं दृष्ट्वा वाचं विसर्जयन्ति । तदुतथा न कुर्य्यात् । यत्रैवा नुष्ठ्याऽस्तमितं मन्येत । तदेव वाचं विसर्जयेत् ॥ अथाग्निमभ्यावृत्यवाचं विसृजते । स प्रथमं व्याहरन् सत्यं वाचाऽभिव्याहरति—"व्रतं कृणुत व्रतं कृणुत, अग्निर्ब्रह्म, अग्निर्यज्ञोवनस्पतिर्यज्ञियः"—इति ॥

१०—व्रतोपचारः ।

त्रिष्कृत्व आह ॥ अथास्मै व्रतं श्रपयन्ति । तदेष एव व्रतयति नाग्नौ जुहोति ॥ तद्धैके प्रथमे व्रते उभौ व्रीहियवा वावपन्ति । यद्यु व्रत दुघा न दुहित, यस्यै वातः कामयेत तस्य व्रतं कुर्य्यात्, इति वदन्ति । तदु तथा न कुर्य्यात् ॥ अन्यतरमेवा वपेत् ॥ यद्यु व्रत दुघा न दुहीत, यस्यैवातः कामयेत तस्य व्रतं कुर्य्यात ॥ तद्धैके प्रथमे व्रते सर्वौषधं सर्वसुरभ्यावपन्ति यदि दीक्षित मार्तिर्विन्देद् येनैवातः कामयेत तेन भिषज्येत यथा व्रतेन भिषज्येदिति । तदु तथा न कुर्य्यात् ॥ यदि दीक्षितमार्तिविन्देद्—येनैवातः कामयेत तेन भिषज्येत् समाप्तिर्ह्येव पुण्या ॥ अथास्मै व्रतं प्रयच्छति । अतिनीय मानुषं कालम् । सायं दुग्ध मपररात्रे । प्रातर्दुग्धमपराह्णे ॥ अथास्मै व्रतं प्रदास्यन्नप उपस्पृशति ॥ अथ व्रतं व्रतयति ॥ अथ व्रतं व्रतयित्वा नाभिमुपस्पृशते ॥ अथ यत्र मेदयन् भवति तत्कृष्णविषाणया लोष्टं वा किञ्चिद्वोपहन्ति । अथ पुनर्लोष्टं न्यस्यति । अथाग्नये परिदायस्वपिति ॥ अथ यत्र सुप्त्वा पुनर्नावद्राप्स्यन् भवति तद्वाचयति—'पुनर्मनः पुनरायुर्मआगन्, पुनः प्राणः पुनरात्माम आगन्, पुनश्चक्षुः पुनः श्रोत्रम् म आगन् । वैश्वानरो अदब्ध स्तनूपा अग्निर्नः पातु दुरितादवद्यात्"–इति ॥ अथ यद्दीक्षितोऽनृत्यं वा व्याहरति क्रुध्यति वा, तन्मिथ्या करोति, व्रतं प्रमीणाति सोऽग्निमेवोपधावति–"त्वमग्ने व्रतपा असि देव आमर्त्येष्वा । त्वं यज्ञेष्वीड्यः"—इति ॥ तस्यो हैषा प्रायश्चितिः ॥ अथ यद्दीक्षितायाभि हरन्ति तस्मिन् वाचयति । "रास्वेयत् सोमा भूयो भर'— देवोनः सविता वसोर्दाता वस्वदात—" इति ॥ पुराऽस्तमयादाह—"दीक्षित वाचं यच्छ" इति । तामस्तमितेवाचं विसृजते ॥ पुरोदयादाह—"दीक्षित वाचं यच्छेति" ।

तामुदिते वाचं विसृजते ॥ नैन मन्यत्र चरन्त मभ्यस्तमियात्। न स्वपन्त मभ्यु-दियात्॥ नात्र प्रायश्चित्ति रस्ति॥ न पुरावभृथादपोऽभ्यवेयात्। नैनमभिवर्षेत॥ अथ परिह्वालं वाच वदति। न मानुषीं प्रसृताम्॥

## अथ सोमग्रहः।

आदित्य एव प्रायणीयो भवत्यादित्य उदयनियः अभित आतिथ्य मेतेहविषी भवतः प्रायणीयश्चोदयनीयश्च। स आदित्यं चरुं प्रायणीयं निर्वपति॥ तावा एताः पञ्च देवता यजति—पथ्यां[१] स्वस्तिं च अग्निं[२] च सोमं[३] च सवितारं[४] च अदितिं[५] चेति। तदाहुः- यदेव प्रायणीये क्रियेत तदुदयनीये क्रियेत। यदेव प्रायणीयस्य वर्हिस्तदुदयनीयस्य बर्हिर्भवतीति तदपोद्धृत्य निदधाति। तां स्थालीं सक्षामकर्षां प्रभृज्य मेक्षणं निदधाति। य एव प्रायणं यस्यर्त्विजस्ते उदयनीयस्यर्त्विजो भवन्ति इति। तदु तथा न कुर्य्यात्। काममेवैतद्बर्हिरनु प्रहरेत्। एवं मेक्षणम् निर्णिज्य स्थालीं निदध्यात्॥ य एव प्रायणी-यस्यर्त्विजस्त उदयनीयस्यर्त्विजो भवन्ति यद्युते विप्रेताः स्युरप्यन्य एव स्युः॥ स वै पञ्च प्रायणीये देवता यजति पञ्चोदयनीये॥ तच्छंय्वन्तं भवति न पत्नीः संयाजयन्ति॥

## ११—सोमः।

सोमं क्रीणाति। अथ यद्ध्रुवाया माज्यं परिशिष्टं भवति तज्जुह्वां चतुष्कृत्वो विगृह्णाति। बर्हिषा हिरण्यं प्रबध्यावधाय जुहोति। अथ हिरण्यमपोद्धरति प्रमुच्य तृणं वर्हिष्यपि सृजति। सूत्रेण हिरण्यं प्रबध्नोते॥ अथा परं चतुगृहीत माज्यं गृहीत्वा— "अन्वारभस्व यजमान" इत्याह। अपोर्णुवन्ति शालायैद्वारे दक्षिणतः सोमक्रय ण्युपतिष्ठते। ( तत्प्रतितामेवैन मेतत् सतीं प्राहैषीत् )॥ अथोपनिष्क्रम्याभि-मन्त्रयते—"चिदसि, मनासि, धीरसि दक्षिणा, क्षत्रियसि यज्ञियासि अदिति रस्युभयतः शीर्ष्णी। सा नः सुप्राची सुप्रतीच्येधि। मित्र स्त्वा यदि बध्नीतां, पूषाऽध्वनस्पातु, इन्द्रायाध्यक्षाय। अनु त्वामातामन्यता मनुपिताऽनुभ्राता सगर्भ्योऽनु सखासयूथ्यः। सादेवि देवमच्छेहि इन्द्राय, सोमं, रुद्रस्त्वावर्तयतु, स्वस्ति सोमसखा पुनरेहि"। इति॥ तामुदीचीमत्या कुर्वन्ति॥ सप्तपदान्यनुनिक्रामति। अथ सप्तमं पद पर्य्युपविशन्ति। स हिरण्यं पदे निधाय जुहोति। अथ स्फ्यमादाय त्रिष्कृत्वः परिलिखति॥ अथ समुल्लिख्य पदं स्थाल्यां संवपति॥ अथाप उपनिनयति॥ अथ यजमानाय पदं प्रयच्छति॥ तद् यजमानः—"मेराय"—इति ब्रुवन् प्रतिगृह्णाति॥ अथाध्वर्य्युरात्मान-मुपस्पृशति॥ अथ पत्न्यै पदं प्रतिपरा हरन्ति। तां नेष्टा वाचयति। "तोतो रायः" ॥ अथैनां सोमक्रयण्या संख्यापयति॥ सा या बभ्रुः पिङ्गाक्षी सा सोमक्रयणी, अथ

या रोहिणो सा वार्त्रघ्नी ॥ अथ या रोहिणी श्येताक्षी सा पितृदेवत्या । स यदि बभ्रुं पिङ्गाक्षीं न विन्देद्—अरुणा स्यात् । यद्यरुणां न विन्देद्—रोहिणी स्यात् । श्येताक्ष्या आशां नेयात् ॥ सा स्यादप्रवीता । सा स्यादवण्डा कूटा कार्णा लक्षिता सप्तशफा स ह्येकरूपा ॥

पदं समुप्य पाणी अवनेनिक्ते । अथास्यां हिरण्यं बध्नीते । अथ संप्रेष्यति—"सोमोपनहन माहर, सोमपर्य्याणहनमाहर उष्णीषमाहर' इति ॥ यद्युष्णीषं विन्देद्—उष्णीषः स्यात् । यद्युष्णीष न विन्देत्—सोमपर्य्याण हनस्यैव द्व्यङ्गुलं वा त्र्यङ्गुलं वाऽवकृन्तेत् उष्णीषभाजन मध्वर्य्युर्वा यजमानो वा, सोमोपनहनमादत्ते, य एव कश्च सोमपर्य्याणहनम् ॥ अथाग्रेण राजानं विचिन्वन्ति । तदुदकुम्भे उपनिहितो भवति । तद्ब्राह्मण उपास्ते । तदभ्यायन्ति प्राञ्चः तदा यत्तु वाचयति—

एष ते गायत्रो भागः—इति मे सोमाय ब्रूतात् ।
एष ते त्रैष्टुभो भागः—इति मे सोमाय ब्रूयात् ॥
एष ते जागतो भागः—इति मे सोमाय ब्रूयात् ।
छन्दोनामानं साम्राज्यं गच्छे त मे सोमाय ब्रूतात् ॥

एकं वा एष क्रीयमाणोऽभि क्रीयते ॥ अथेत्य प्राङ्पविशति । सोऽभिमृशति अत्र हैकेतृणं वा काष्ठं वा विस्वाऽपास्यन्ति । तदु तथा न कुर्य्यात् ॥ अथ वासो द्विगुणं वा चतुर्गुण वा प्राग्दशं वोदग्दश वोपस्तृणाति । तद्राजानं मिमीते । सवित्र्या मिमीते । अतिछन्दसामिमीते ।

"अभि त्यं देवं सवितारमो ण्योः कवि क्रतुमर्चामि सत्य सवं रत्नधामभि प्रियं पतिं कविम् उर्ध्वा यस्यामतिर्भा अदिद्युतत् सर्वामनि हिरण्य पाणि रमिमीत सुक्रतुः कृपास्वः" ॥ इति ॥ एतया सर्वाभिः एतया चतसृभिः एतया तिसृभिः, एतया द्वाभ्याम्, एतयैकया, एतयैवैकया, एतया द्वाभ्याम्, एतयातिसृभिः एतया चतसृभिः, एतया सर्वाभिः—समस्याञ्जलिनाऽभ्यावपति ॥ स वा उदाचं न्याचं मिमीते स दशकृत्वोमिमीते ॥ अथ सोमोपनहनस्य समुत्पाय्यान्तानुष्णीषेणविग्रथ्नाति । अथ मध्येऽङ्गुल्याकाशं करोति । तं सोमविक्रयिणे प्रयच्छति ॥ स वै राजानं पणते । स आह—"सोमविक्रयिन् क्रय्यस्ते सोमो राजा" ॥ इति ॥ क्रय्य इत्याह सोमविक्रयी ॥ तं वै ते क्रीणानि—इति । क्रीणीहीत्याह सोमविक्रयी । कलया ते क्रीणानीति ॥ भूयो वा अतः सोमो राजाऽर्हति—इत्याह सोम विक्रयी ॥ भूयएवातः सोमो राजाऽर्हति, महांस्त्वेवगोर्महिमा:—इत्यध्वर्य्युः। "गोर्वैप्रतिधुक् तस्यै शृतं, तस्यैशरः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनं

तस्यै नवनीतं, तस्यै घृतं, तस्या अमिक्षा, तस्यै वाजिनम् । शफेन ते क्रीणानीति ॥ 'भूयो वा अतः सोमोराजार्हतीत्याह सोमविक्रयी । भूय एवातः सोमो राजार्हति— महांस्त्वेवगोर्महिमा"—इत्यध्वर्युः एतान्येव दशवीर्याण्युदाख्यायाह—पदा ते । अर्द्धेन ते गवाते क्रीणामीति । क्रीतः सोमो राज्येत्याह सोमविक्रयी । वयांसि प्रब्रूहि—" ॥ इति ॥ स आह—चन्द्रं ते वस्त्रं ते, छागाते, धेनुस्ते, मिथुनौते गावौ, तिस्रस्तेऽन्या इति । स यदर्वाक् पणान्ते परः सपादयन्ति ॥ अथ हिरण्ये वाचयति—"शुक्रं त्वा शुक्रेण क्रीणामि, चन्द्रं चन्द्रेण, अमृतममृतेन"—इति॥ अथ सोमविक्रयिणमभिप्रकम्पयति—"अस्मेतेगोः" इति ॥ तद् यजमानमभ्याहृत्यन्यस्यति—"अस्मे ते चन्द्राणि—"इति । अथा जायां प्रतीचीनमुख्यां वाचयति—"तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम्—" इति ॥ स वा अनेनैवाजां प्रयच्छति.—अनेन राजानमादत्ते । तं यजमानस्य दक्षिणऊरौ प्रत्युह्य वासो निदधाति । अथ सोमक्रयणाननुदिशति । "स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणाः तान् रक्षध्वं माबोदभन्"—इति ॥ अथा त्रापोर्णुते । अथ वाचयति—"परिमाग्ने दुश्चरिताद्बाधस्वामा सुचरिते भज"—इति ॥ अथ राजान मादायोपोत्तिष्ठति । अथ राजान मादाया रोहणमभि प्रैति । "प्रति पन्थामपद्महि स्वस्तिगामनेहसम् येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु—" इति । तः वा इति हरन्ति अनसा परिवहन्ति ॥ अथ यदपामन्ते क्रीणाति, यद्धिरण्यं भवति,यद्वासो भवति, यदजा भवति, यद्धेनुर्भवति, यन्मिथुनौ भवतः । तं वै दशभिरेव क्रीणीयात् न दशभिः ।

निडे कृष्णाजिन मास्तृणाति अथैवमभिपद्यवाचयति— "अस्तभ्नाद्द्यां वृषभो अन्तरिक्ष ममिमीत वरिमाणं पृथिव्याः । आसीदद् विश्वा भुवनानि सम्राड् विश्वेतानि वरुणस्य व्रतानि—इति ॥ अथ सोमपर्याणहनेन पर्याणह्यति ॥ अथ यदि द्वे कृष्णाजिने भवतः तयोरन्यतरत् प्रत्यानह्यति प्रतीनाहभाजनम् । यद्यु एकं भवति—कृष्णाजिनग्रीवाः एवावकृत्य प्रत्यानह्यति प्रतीनाह भाजनम् ॥ उद्धृते प्रउग्ये फलके भवतः, तदन्तरेण तिष्ठन् सुब्रह्मण्यः प्राजति पलाशशाखया ॥ अथा नड्वाहावाजन्ति । तौ यदि कृष्णौ स्याताम्, अन्यतरो वा कृष्णः तत्र विद्याद्—वर्षिष्यत्यैषमः पर्जन्यो वृष्टिमान् भविष्यतीति—एतदुविज्ञानम ॥ अथ युनक्ति । अथ पश्चात् परिक्रम्य अपालम्ब मभिपद्याह—"सोमायक्रुतायानुब्रूहि"—इति । "सोमायपर्युह्यमाणाय"— इति वा अतो यतरथा कामयेत ॥ अथ वाचयति "भद्रोमेऽसि प्रच्यवस्व भुवस्पते, विश्वान्यभिधामानि, मात्वापरिपरिणो विदन् मात्वा परिपन्थिनो विदन्, मत्वा वृका अघायवो विदन्, श्येनो भूत्वा परापत"—इति ॥ अथ शरीरमेवान्ववहन्ति ॥ अथ सुब्रह्मण्यां माह्वयति ॥ त्रिष्कृत्वः,—"सुब्रह्मण्योम् सुब्रह्मण्योम्—इन्द्रागच्छ,हरिव आगच्छ,मेधातिथेर्मेष वृषणश्वस्य

मेने । गौरावस्कन्दिन्नहल्यायै जार कौशिक ब्रह्मण गौतमब्रुवाणा इत्यहे सुत्यां देवा ब्रह्माण आगच्छत"-इति । यदि कामयेत-ब्रुया देतद्-गौतमब्रवाणा"—इति । यद्यु कामयेत-अपि नाद्रियेत ॥ अथ प्रति प्रस्थाता अग्रेण शाला मग्नीषोमीयेण पशुना प्रत्युपतिष्ठते । तद्धैके आहवनीयादुल्मुक माहरन्ति तदु तथा न कुर्य्यात् ॥ स वै द्विरूपो भवति कृष्ण-सारङ्गस्यादित्याहुः । यदि कृष्णसारङ्गं न विन्देद्-अथो अपि लोहित सारङ्गः स्यात् तस्मिन् वाचयति- 'नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्य्यत । दूरेदृशे देव जाताय केतवे दिवस्पुत्राय सूर्य्याय शंसत"-इति॥अथाध्वर्य्युरारोहणं विमुञ्चति॥अथ चत्वारो राज्यसन्दीमाददते । औदुम्बरी भवति । नाभिदघ्नाभवति तामभिमृशति ॥ अथ कृष्णाजिनमास्तृणाति । अथैनं शालां प्रपादयति । स प्रपादयन् वाचयति । "या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोमदुर्य्यान्"- इति ॥ अत्र हैके उदपात्रमुपनिनयन्ति । तदु तथा न कुर्य्यात् ॥

( आतिथ्येष्टिः )

अभित आतिथ्यमेते हविषी भवतः प्रायणीयश्चोदयनीयश्च ॥ सोमाय वै क्रीताय राज्ञे एतदातिथ्यं करोति ॥ तदाहुः पूर्वोऽतीत्य गृह्णीयादिति । तदुतथा न कुर्य्यात् । विमुच्यैव प्रपाद्यगृह्णीयात् ॥ स वै संत्वरमाण इव गृह्णीयात् । तत् पत्न्य-न्वारभते । पर्य्युह्यमाणं वै यजमानोऽन्वारभते । अथात्र पत्नी । स वा अन्येनैव ततो यजुषा गृह्णीयात् । पञ्चकृत्वो गृह्णाति ॥ नव कपालः पुरोडाशो भवति । कार्ष्मर्य्यमयाः परिधयः । आश्ववालः प्रस्तरः ऐक्षव्यौ विधृती । अथाज्याङ्गं सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति । न ह्यत्रानुयाजा भवन्ति ॥ आसाद्यहवींष्य ग्र मन्थति । सोऽधि-मन्थनं शकलमादत्ते । अथ दर्भ तरुणके निदधाति । अथा धरारणिं निदधाति अथो त्तरारण्याज्यविलाप नीमुपस्पृशति । तामभि निदधाति । स मन्थति । जातायानुब्रूहीत्याह यदा जायते । प्राह्रियमाणायेत्यनुप्रहरन् । सोऽनुप्रहरति । अथ स्रुवेणोपहत्याज्य मग्निमभि जुहोति । तदिडान्तं भवति । नानुयाजान् यजन्ति ।

---

## १२ अथ प्रवर्ग्य कर्म ।

१—तरङ्गावान्तर दीक्षायाः प्राक् तानूनप्त्रम् ।

अथ तानुनप्त्रंगृह्णाति । आज्यानि गृह्णानो न सर्वेणेव समभ्यवेयात् । ये नोह समभ्यवेयान्नास्मै द्रुह्येत् । इदं ह्याहुः-"न सतानूनप्त्रिणे द्रोग्धव्य मति" ॥ अथ समव मृशन्ति । यदि बहवो दीक्षेरन् गृहपतय एव व्रतमभ्युत्सिच्य प्रपच्छेयुः । स हि तेषा मिन्द्रभाजनं भवति । यद्य दक्षिणावता दीक्षेत-यजमानायैव व्रतमभ्युत्सिच्य प्रयच्छेयुः । इदं ह्याहुः-इन्द्रो यजमानः इति ॥

२—अवान्तर दीक्षा।

स वै समिधमेवाभ्यादधदवान्तर दीक्षामुपैति । स समिधमभ्यादधाति। संतरामङ्गुलीरचते, संतरां मेखलां पर्य्यस्तामेवैतत्संती पर्य्यस्यते ॥ अथैनमतो मदन्तीभि उपचरन्ति । अथ मदन्तीभिरुपस्पृश्य राजानमाप्याययन्ति ॥ तदाहुः तमेवाग्ने आप्याययेयुः अथावान्तरदीक्षाम्, अथ तानूनप्त्राणीति । तदु तथा न कुर्य्यात् । ते वै षड् भूत्वाऽप्याययन्ति । अथ प्रस्तरे निह्नुवते ॥ अथाह समुल्लप्य प्रस्तरम्—'अग्नीन्मदन्त्यापा ३ इति'। मदन्तीत्यग्नीदाह ॥ ताभिरेहीति । उपर्युपर्य्यग्निमतिहरति । नानुप्रहरति । तमग्नीधे प्रयच्छति । तमग्नीन्निदधाति ॥

---

३— प्रवर्ग्यम् ।

यदि प्रवर्ग्यवान् भवति, प्रवर्ग्येण प्रचर्य्याप्योपसद्भिः प्रचरन्ति । तद् याः पूर्वाह्णेऽनुवाक्या भवन्ति। ता अपराह्णे याज्याः । या याज्यास्ता अनुवाक्याः, तद्व्यतिषजति ।

---

१३—उपसद् यागः (तपः)

उपसद्भिर्यजते । ता वा आज्यहविषो भवन्ति । स वा अष्टौकृत्वो जुह्वां गृह्णाति । चतुरुपभृति । अथो इतरथाहुः—चतुरेवकृत्वो जुह्वां गृह्णीयात् अष्टौ कृत्व उपभृति । तदु तथा न कुर्य्यात् ॥ अग्नीषोमाभ्यां सार्द्धं गृह्णाति—विष्णवे एकाकिने । अन्यतरमेवाघारमाघारयति यं स्रुवेण ॥ अथा श्राव्य न होतारं प्रवृणीते । सीदहोतरित्येवाह । उपविशति होता होतृषदने । उपविश्य प्रसौति । प्रसूतोऽध्वर्य्युः स्रुचावादत्ते । स आह 'अतिक्रामन्नग्नयेऽनुब्रूहि'-इति । आश्राव्याह—'अग्निं यज'–इति । वषट् कृते जुहोति ॥ अथाह—'सोमाय नुब्रूहि'-इति । आश्राव्याह —'सोमं यज'–इति । वषट् कृते जुहोति ॥ अथ यदुपभृत्याज्यं भवति तत्समानयमान आह—"विष्णवेऽनुब्रहि"–इति । आश्राव्याह –'विष्णुं यज'–इति । वषट् कृते जुहोति ॥ स समानत्र तिष्ठन् जुहोति ॥ स वै तिस्रं उपसद उपेयात । द्विरेकया प्रचरति द्विरेकया । ताः षट् संपद्यन्ते । यद्यु द्वादशोपसद उपेयात । द्विरेकया प्रचरति द्विरेकया । ताश्चतुर्विंशतिः संपद्यन्ते ॥ स वै सायं प्रातः प्रचरति । पूर्वाह्णे प्रचरति अपराह्णे प्रचरति । स जुहोति । यया द्विरेकस्याह्नः प्रचरिष्यन् भवति॥ यद्यु द्वादशोपसद उपेयात–चतुरहमेकया प्रचरेच्चतुरहमेकया ॥

अथातो व्रतोपसदामेव । पर उर्वीर्वा अन्या उपसदः, परोऽह्वीरन्याः । स यासामेकं प्रथमाहं दोग्धि, अथ द्वौ, अथ त्रीन्,—ताः परउर्वीः । अथ यासां त्रीन्

प्रथमाहं दोग्धि, अथ द्वौ, अथैकं, ताः परोऽह्वीः । या वै परोऽह्वीस्ताः परउर्वीः, या परउर्वीस्ताः परोऽह्वीः । परोऽह्वीरेवोपसद उपेयात् ॥ यद्यु द्वादशोपसद उपेयात्—त्रीं श्चतुरहं दोहयेत्, द्वौ चतुरह, मेकं चतुरहम् ॥

---

१—वेदि क्लृप्तिः ।

तद्य एष पूर्वार्ध्यो वर्षिष्ठः स्थुणाराजो भवति । तस्मात् प्राङ् प्रक्रामति त्रीन् विक्रमान्, तच्छङ्कुं निहन्ति सोऽन्तः पातः ॥ १ ॥ तस्मान्मध्यमाच्छङ्कोर्दक्षिणापञ्च-दश विक्रमान् प्रक्रामति । तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः ॥ २ ॥ तस्मान्मध्यमा-च्छङ्कोरुदङ् पञ्चदश विक्रमान् प्रक्रामति । तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः ॥ ३ ॥ तस्मान्मध्यमाच्छङ्कोः प्राङ् षट्त्रिंशतं विक्रमान् प्रक्रामति, तच्छङ्कुं निहन्ति स पूर्वार्द्धः ॥ ४ ॥ तस्मान्मध्यमाच्छङ्कोर्दक्षिणा द्वादश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स दक्षिणोंऽसः ॥ ५ ॥ तस्मान्मध्यमाच्छङ्को रुदङ् द्वादश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स उत्तरोंऽसः ॥ ६ ॥ एषामात्रावेदेः त्रिंशद्विक्रमा पश्चाद्भवति, अथो अपि त्रयस्त्रिंशत् स्युः । षट् त्रिंशद्विक्रमा प्राची भवति । सोऽस्य दिव्याहवनीयो भवति ॥ अथ चतुर्विंशति विक्रमा पुरस्ताद् भवति,—एषामात्रा वेदेः ॥ पश्चाद्वरीयसी भवति ॥ अथ यदुत्तरवेदिमुत्तरां वेदेरुपकिरति तस्मात् उत्तरवेदिर्नाम ॥ तां वै युग-शम्येन विमिमीते ॥ ( सद्यः क्रियोऽश्वः श्वेतो दक्षिणा तस्य रुक्मः पुरस्ताद् भवति । यद्यश्वं श्वेतं न विन्देद्—अपि गौरेवः श्वेतः स्यात् । तस्य रुक्मः पुरस्ताद् भवति ॥ स धार्यमाणोऽग्नौ उत्तरवेदिं व्याघारयति । निवृत्तदक्षिणं न प्रतिगृह्णीयात् ) ॥ अथ शम्यां च स्फ्यं चादत्ते । तद् य एष पूर्वार्द्धः शङ्कुर्भवति तस्मात् प्रत्यङ् प्रक्रामति त्रीन् विक्रमान् । तच्चात्वालं परिलिखति । स चात्वालस्य मात्रा । नात्र मात्रास्ति । यत्रैव स्वयं मनसा मन्येत अग्रेणोत्करं तच्चात्वालं परिलिखेत् । स वेद्यन्तादुदीचीं शम्यां निदधाति स परिलिखति ॥ अथ पुरस्तादुदीचीं शम्यां निदधाति स परिलिखति ॥ अथानुवेद्यन्तं प्राचीं शम्यां निदधाति स परिलिखति । अथोत्तरतः प्राचीं शम्यां निदधाति स परिलिखति । अथ हरति यत्र हरति तदग्नीदुपसीदति । स वा चतुः कृत्वो हरति । हृत्वा निदधाति । तां वै चतुः स्रक्तेश्चात्वालाद्धरति ॥ अथानुव्यूहति तां वै युगमात्री वा सर्वतः करोति । यजमानस्य वा दशदश पदानि । मध्ये नाभिका-मिव करोति । तामद्भिरभ्युक्षति । अथ सिकताभिरनु विकिरति ।

इध्ममभ्यादधति । उपयमनीरुपकल्पयन्ति । आज्यमधिश्रयति । स्रुवं च स्रुचं च संमार्ष्टि । अथोत्पूयाज्यं पञ्चगृहीतं गृह्णीते । यदा प्रदीप्त इध्मो भवति, अथोद्यच्छन्ती-

श्मम् । उपयच्छन्त्युपयमनीः । अथाह—'अग्नये प्रह्रियमाणायानुब्रूहि' । "एकस्फ्ययानुदेहि"-इति । अनूदेति प्रति प्रस्थानैक स्फ्यया एतस्मान्मध्यमाच्छङ्कोर्य एष वेदेर्जघनार्द्धे भवति । तद्यदेवात्रान्तः पातेन गार्हपत्यस्य वेदेर्व्यवच्छिन्नं भवति तदेवैतदनुसतनोति ।। तद्धैके उत्तरवेदेरनूदायन्ति तदु तथा न कुर्य्यात् ।। त आयन्त्यागच्छन्त्युत्तरवेदिम् ।। प्रोक्षणीरध्वर्य्युरादत्ते ।। स पुरस्तादेवाग्रे प्रोक्षति उदङ् तिष्ठन् । अथ पश्चात् प्रोक्षति । अथ दक्षिणतः प्रोक्षति । अथोत्तरतः प्रोक्षति । अथ याः प्रोक्षण्यः परिशिष्यन्ते । तद् ये एते पूर्वस्रक्ती तयोर्या दक्षिणा तान्यन्तेन बहिर्वेदि निनयति । 'इदमहं तप्तं वाबहिर्धा यज्ञान्निःभृजामीति ब्रूयाद् यदि नोभिचरेत् । यद्यु अभिचरेत्—आदिशेत्—'इदमहं तप्तं वारमुमभि निःसृजामीति ।। स धार्य्यमाणोऽग्नावुत्तरवेदिं व्याघारयति । तद्वाएतदेकं कुर्वन् द्वयं करोति यदुत्तरवेदिं व्याघारयति अथ येषां मध्यंनाभिकेव भवति तस्यै ये पूर्वस्रक्ती तयोर्या दक्षिणा तस्या माघारयति । अथापरयोरुत्तरस्याम् । अथापरयोर्दक्षिणस्याम् । अथ पूर्वयोरुत्तरस्याम् । अथ मध्ये आघारयति अथ स्रुचमुद्यच्छति । अथ परिधीन् परिदधाति । मध्यमं दक्षिण मुत्तरम् सभारानुपनिवपति । या शाष्णो नेदिष्ठं स्यात् तामाच्छिद्याहरेत् । यद्युतां न विन्देद् -यामेव कञ्चाहरेत् ।।

---

## २—हविर्धाने ।

एष वै यज्ञस्तायमानो यावानेव पुरुषस्तावान् विधीयते । शिर एवास्य हविर्धानम् । मुखमेवास्याहवनीयः । स्तुप एवास्य यूपः । बाहू एवास्याग्नीध्रीयश्च मार्जालीयश्च । उदरमेवास्य सदः । अथ यावेतौ जघनेनाग्नीपादावेवास्यैतौ ।। तदुभयतो द्वारं हविर्धानं भवति, उभयतो द्वारं सदः । प्रणिक्ते हविर्धाने उपतिष्ठते । ते समववर्तयन्ति । दक्षिणेनैव दक्षिण मुत्तरेणोत्तरम् । यद्वर्षीयस्तद्दक्षिणं स्यात् । तयोः समववृत्तयोश्छदिरधि निदधति यदि छदिर्न विन्देयुः, छदिः संमितां वा भितिं प्रत्यानह्यति । रराट्यां परिश्रयन्ति । उच्छ्रयोभ्यां छदिः पश्चादधिनिदधति । छदिः संमितां वा भित्तिम् ।।

अथ पुनः प्रपद्या चतुर्गृहीतमाज्यं गृहीत्वा सावित्रं प्रसवाय जुहोति । अथापरं, चतुर्गृहीतमाज्यं गृहीत्वा उपनिष्क्रामति । दक्षिणया द्वारा पत्नी निष्क्रामयन्ति । स दक्षिणस्य हविर्धानस्य दक्षिणायां वर्तन्यां हिरण्यं निधाय जुहोति ।। सं स्रवं पत्न्यै पाणाव नयति । साह्यस्य संतापमुपानक्ति । प्रयच्छति प्रतिप्रस्थात्रे स्रुचं चाज्यविलापनीं च पर्य्याणयन्ति सुभौ जघनेनाग्नी ।। चतुर्गृहीतमाज्यं गृहीत्वा प्रति प्रस्थातोत्तरस्य हविर्धानस्य दक्षिणायां वर्तन्यां हिरण्यं निधाय जुहोति । सं स्रवं पत्न्यै पाणावानयति ।

साचस्य सन्तापमुपानक्ति । पराग्गुपानक्ति ॥ अथाह—"हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि"—इति ॥ अथ वाचयति । "प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम्"—इति ॥ समुद्गृह्य व प्रवर्तयेयुर्यथानोत्सर्जेताम् ॥ यद्युत्सर्जेताम्-एतद्वाचयेत्—"स्वं गोष्ठमावदतं देवी दुर्ये आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टम्"—इति ॥ तदाहुः उत्तरवेदेः प्रत्यङ् प्रक्रामेत्-त्रीन् विक्रमान् , तद्धविर्धाने स्थापयेत् सा हविर्धानयोर्मात्रा"—इति । नात्र मात्रास्ति । यत्रैव स्वयं मनसा मन्येत-नाहैव सत्राऽत्यन्तिके, नो दूरे, तत् स्थापयेत् ॥ ते अभिमन्त्रयते—"अत्र रमेथां वर्ष्मन् पृथिव्याम्"—इति । नभ्यस्थे करोति । अथोत्तरेण पर्य्येत्याध्वर्युर्दक्षिणं हविर्धानमुपस्तभ्नाति ॥ अथ प्रतिप्रस्थातोत्तरं हविर्धानमुपस्तभ्नाति । अथ मध्यमं छदिरुपस्पृश्य वाचयति-"प्रतद्विष्णुः स्तवते वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा"—इति ॥ अथ रराट्यामुपस्पृश्य वाचयति-"विष्णो रराटमसि"—इति । अथोच्छ्राया उपस्पृश्य वाचयति—"विष्णोः श्नप्त्रेस्थः"—इति ॥ अथ स्यूजन्या स्यन्द्यया प्रसीव्यति । अथ ग्रन्थिं करोति तं प्रकृते कर्मन्विष्यति तथोह्याध्वर्युं वा यजमानं वा ग्राहो न विन्दति । तन्निष्ठितमभिमृशति ।

---

३—उपरवाः ।

उपरवान् खनति । स दक्षिणस्य हविर्धानस्याधोधः प्रउगं खनति । सोऽभ्रिमादाय तान् प्रादेशमात्रं विना परिलिखति । तद्यावेतौ पूर्वौ तयोर्दक्षिणमेवाग्रे परिलिखेत्, अथापरयोरुत्तरम्, अथापरयोर्दक्षिणम्, अथ पूर्वयोरुत्तरम् ॥ अथो इतरथाहुः—अपरयोरेवाग्रे उत्तरं परिलिखेत्, अथ पूर्वयोर्दक्षिणम्, अथापरयोर्दक्षिणम्, अथ पूर्वयोरुत्तरमिति ॥ अथो अपिसमीच एव परिलिखेत् । एतं त्वेवोत्तमं परिलिखेद् य एष पूर्वयोरुत्तरो भवति ॥ तान् यथा परिलिखितमेव यथा पूर्वं खनति । तान् यथा खातमेवोत्किरति तान् बाहुमात्रान् खनेत् । तानक्ष्णया संतृन्दति । यद्यक्ष्णया न शक्नुयाद् अपि समीचः । तान् यथा खातमेवावमर्शयति । अथाध्वर्य्युश्च यजमानश्च संमृशते । पूर्वयोर्दक्षिणेऽध्वर्य्युर्भवति । अपरयोरुत्तरे यजमानः सोऽध्वर्य्युः पृच्छति । "यजमान ! किमत्र"—इति । 'भद्रम्'इत्याह ।'तन्नौ सह'—इत्युपांश्वध्वर्य्युः ॥ अथापरयोर्दक्षिणेऽध्वर्य्युर्भवति पूर्वयोरुत्तरे यजमानः । स यजमानः पृच्छति'अध्वर्यो किमत्र'—इति ।'भद्र'मित्याह । 'तन्मे' इति यजमानः । अथ प्रोक्षति । अथ या प्रोक्षण्यः परिशिष्यन्ते ता अवटेष्ववनयति । अथ बर्हींषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति । अथ बर्हींषि तनूनीवोपरिष्टात् प्रच्छादयति । अथाधिषवणे फलके उपदधाति । अथ पर्य्यूहति । अथा धिषवणं परिकृतं भवति । तन्निदधाति । अथ ग्रावण उपावहरति । तन्निदधाति ॥

---

## ४—औदुम्बरी।

उदरमेवास्य सदः। तन्मध्ये औदम्बरीं मिनोति। अथ य एष मध्यमः शङ्कुर्भवति वेदेर्जघनार्द्धे तस्मात् प्राङ् प्रक्रामति षड् विक्रमान् दक्षिणा सप्तम मपक्रामति। तदवटं परिलिखति। सोऽभ्रिमादत्ते। अथावटं परिलिखति। अथ खनति। प्राञ्च मुत्करमुत्किरति। यजमानेन संमायोदुम्बरीं परिवासयति। तामग्रेण प्राचीं निदधाति। एतावन्मात्राणि वर्हींष्युपरिष्टाद्‌धिनिदधाति। अथ यवमत्यः प्रोक्षण्यो भवन्ति। स यवानावपति। अथ प्रोक्षति। अथ याः प्रोक्षण्यः परिशिष्यन्ते ता अवटेऽवनयति। अथ वर्हींषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति। सा यथानिखातौषधिषु मितास्यादेवमेतास्वोषधिषु मिता भवति तामुच्छ्रयति। अथ मिनोति। अथ पर्य्यूहति। अथ पर्य्यषति समं भूमि पर्य्यषणं करोति। गर्तस्य वा उपरिभूमि। अथाप उपनिनयति। अथैनमभिपद्य वाचयति—'ध्रुवाऽसि, ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयात्'–इति, पशुभिरिति वा॥ अथ स्रुवेणोपहत्याज्यं विष्टपमभि जुहोति॥ अथ छदिरधिनिदधाति। तदुभयतश्छदिषी उपदधाति। उत्तरतस्त्रीणि परस्त्रीणि तानिनव। तदुदीचीनवंशं सदोभवति, प्राचीनवंशं हविर्धानम्। अथैते मिश्रे यदाग्नीध्रं च सदश्च। तत् परिश्रयन्ति। अथ लस्यूजन्या स्पन्द्यया प्रसीव्यति। अथ ग्रन्थिं करोति प्रकृते कर्मन्विष्यति तथोहाध्वर्य्युं वा यजमानं वा प्राहो न बिन्दति तन्निष्ठितमभिमृशति॥ अथ हविर्धानयोजनार्द्धं समन्वीक्ष्योत्तरेणाग्नीध्रं मिनोति। तस्यार्द्धमन्तर्वेदि स्याद् अर्द्धं वहिर्वेदि। अथो अपि भूयोऽर्द्धादन्तर्वेदि स्यात् कनीयो वहिर्वेदि। अथो अपि सर्वमेवान्तर्वेदि स्यात्। तन्निष्ठमभिमृशति।

---

## ५—षोड़शधिष्ण्याः

विजामानो हैवास्य धिष्ण्याः, इने समङ्काः। अध्वर्य्युः समया धिष्णयान्नातीयात्। यद्यध्वर्य्योः शालायामर्थः स्यादुत्तरेणैवाग्नीध्रीयं संचरेत्। ते वा एते सोमस्यैव गुप्त्यै न्युप्यन्ते—आहवनीयः पुरस्तात् मार्जालीयो दक्षिणतः आग्नीध्रीय उत्तरतः, अथ ये सदसि ते पश्चात् तेषां वा अर्धानुपकिरन्ति, अर्धानतुदिशन्ति॥

---

## ६—वैसर्जनीय होमः ।

वैसर्जितानि जुहोति। योऽपिव्रतः स्यात् सोऽन्वारभेत । यद्यु अन्यत्र चरेन्ना-द्रियेत सोऽपराह्ने वेदिं स्तीर्त्वा अर्धव्रतं प्रदाय संप्रपद्यन्ते । इध्म मभ्यादधति । उपय-मनी रुपकल्पयन्ति । आज्यमधिश्रयति । स्रुचः संमार्ष्टि । उपस्थे राजानं यजमानः कुरुते । अथ सोमक्रयण्यै पदं जघनेन गार्हपत्यं परिकिरति । तद्धैके चतुर्धा कुर्वन्ति यत्राहवनीयमुद्धरन्ति ता सूपयमनीषु चतुर्भागमक्षं चतुर्भागेणोपाञ्जन्ति । एता सूपय-ननीषु चतुर्भागं जघनेन गार्हपत्यं चतुर्भागं परिकिरति । तदु तथा न कुर्य्यात् । सार्द्ध-मेव परिकिरे जघनेन गार्हपत्यम् । अथोत्पूयाज्यं चतुर्गृहीते जुह्वांचोपभृति च गृह्णाति । पञ्चगृहीतं पृषदाज्यं । धारयन्ति स्रुचो यदा प्रदीप्त इध्मो भवति ॥ अथ जुहोति । अथाप्तवे द्वितीया माहुतिं जुहोति । उद्यच्छन्नीध्मम् । उपयच्छन्त्युप यमनीः ॥ अथाह-'अग्नये प्रह्रियमाणायानुब्रूहि'–इति । तद्धैके—"सोमाय प्रणीयमानाय"–इत्याहुः । तदु तथा न ब्रूयात् ॥ आददते ग्राव्णो, द्रोणकलशं, वायव्यानि, इध्मं कार्ष्मर्य्यमयान् परिधीन् आश्ववालं प्रस्तर, मैक्षव्यौ विधृती, तद्बर्हिरुपसंनद्धं भवति, वपाश्रपण्यौरशने, अरणी, अधिमन्थन, शकलो, वृषणौ ॥ तत्समादाय प्राञ्च आयन्ति । तदायत्सुवाच-यति—"अग्नेनय सुपथाराये अस्मान विश्वानि देव वयुनानि विद्वान् ॥ युयो ध्यस्म-ज्जुहुराण मेनो भूयिष्ठां ते नम उक्तिं विधेम" ॥ १ ॥ इति ॥ त आयन्त्यागच्छन्त्या-ग्नीध्रे निदधाति । स निहिते जुहोति । तदेव निदधाति ग्राव्णो द्रोणकलशं वायव्यानि । अथोत्तरमादायायन्ति तदुत्तरेणाहवनीयमुपसादयन्ति । प्रोक्षणीरध्वर्य्युरादत्ते । स इध्म-मेवाग्रे प्रोक्षति । अथ वेदिम् । अथास्मै बर्हिः प्रयच्छन्ति । तत्पुरस्ताद्ग्रन्थ्यासादयति । तत् प्रोक्ष्योपनिनीय विस्रंस्य ग्रन्थिमाश्ववालः प्रस्तर उपसंनद्धो भवति । तं गृह्णाति । गृहीत्वा प्रस्तरमेकवृद्बर्हिस्तृणाति । स्तीर्त्वा बर्हिः कार्ष्मर्य्यमयान् परिधीन् परिदधाति परिधाय परिधीन समिधावभ्यादधाति । अभ्याधाय समिधौवैष्णव्यर्चा जुहोति । अथासाद्यस्रुचोऽय उपस्पृश्य राजानं प्रपादयति । स दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति । तदेन मासादयति । अथानुपसृज्योपतिष्ठते । अथोपनिष्क्रा-मति । अथेत्याहवनीये समिधमभ्यादधाति ॥ पुरा दीक्षितस्य नाश्नीयात् अथ हास्या-त्राश्नन्ति, अस्यात्र नाम गृह्णन्ति । अथात्राङ्गुलीर्विसृजते ॥

---

## ७—यूप संपादनम् ।

यूपं भ्रक्ष्यन् वैष्णव्यर्चा जुहोति । स यदि स्रुचा जुहोति–चतुर्गृहीतमाज्यं गृहीत्वा जुहोति । यद्युस्रुवेण–स्रुवेणैवोपहत्य जुहोति । यदाज्यं परिशिष्टं भवति तदा दत्ते । यत्तदणः शस्त्रं भवति तत्तत्रादत्ते । त आयन्ति स यं यूपं जोषयन्ते । तमेवम–भिमृश्य जपति पश्चाद्वैव प्राङ् तिष्ठन्नभि मन्त्रयते—

"अत्यन्यां२॥ अङ्गां, नान्यां२॥ उपागामर्वाक् त्वापरेभ्योऽविदं परोऽवरेभ्यः । तं त्वा जुषामहे देववनस्पते देवयज्यायै, देवास्त्वा देवयज्यायै जुषन्ताम्" । इति ॥ अथ स्रुवेणोपस्पृशति । अथ दर्भतरुणकमन्तर्दधाति । अथ परशुनाप्रहरति । स यं प्रथमं शकलमपच्छिनत्ति तमादत्ते । तं वा अनक्षस्तम्भं वृश्चेत् । उत ह्येन मनसा वृहन्ति । तं प्राञ्च पातयेत् । अथो उदञ्चम् ॥ अथो प्रत्यञ्चम् । दक्षिणायै त्वे वैनं दिशः परिविवाधिषेत् ॥ तं प्रच्यवमान मनुमन्त्रयते–'द्यां मालेखीरन्तरिक्षं मा हिंसीः पृथिव्या सम्भव ॥ अयं हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय'–इति ॥ अथाव्रश्चनमभि जुहोति । तं परिवासयति । स यावन्तमेवाग्रे परिवासयेत् तावान् स्यात् ॥ पञ्चारत्निपरिवासयेत् । षडरत्निं परिवासयेत् । अष्टारत्निं परिवासयेत् । एका–दशारत्निं परिवासयेत् । सप्तदशारत्निर्वाजपेययूपः । अपरिमित एव स्यात् । स वा अष्टाश्रिर्भवति ॥

अभ्रिमादत्ते । अथावटं परिलिखति । अथ खनति । प्राञ्चमुत्करमुत्किरति । उपरेण संमायावटं खनति । तदग्रेण प्राञ्चं यूपं निदधाति । एतावन्मात्राणि बर्हींष्यु–परिष्टादधिनिदधाति । तदेवोपरिष्टाद् यूप शकलमधिनिदधाति । पुरस्तात् पार्श्वतश्च–बालमुपनिदधाति । अथ यवमत्यः प्रोक्षण्यो भवन्ति । स यवानावपति । अथ प्रोक्षति । अथ याः प्रोक्षण्यः परिशिष्यन्ते ता अवटेऽवपति । अथ बर्हींषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति । अथ यूपशकल प्रास्यति । अथ स्रुवेणोपहत्याज्यं मवट मभि जुहोति । अथ पुरस्तात् परीत्योदङ्ङासीनो यूपमनक्ति । स आह–"यूपायाज्यमाना–यानुब्रूहि"–इति ॥ सोऽनक्ति । अथ चषालमुभयतः प्रत्यज्य प्रतिमुञ्चति । मध्ये संगृहीतमिव भवति । आन्तमग्निष्ठामनक्ति । अथ परिव्ययणं प्रतिसमन्तं परिमृशति । अथाह—"उच्छ्रीयमाणायनुब्रूहि"–इति । स उच्छ्रयति । अथ मिनोति त्रिष्टुभा । सं प्रत्यग्निमग्निष्ठां मिनोति । अथ पर्य्यूहति । अथ पर्य्यूषति । अथाप उपनिनयति अथैवमभिपद्य वाचयति—"विष्णोः कर्माणि पश्य । यतोव्रतानि पस्पशे । इन्द्रस्य युज्यः सखा"–इति ॥ अथ चषालमुदीक्षते । अथ त्रिवृता परिव्ययति । अथ यूप शकलं स्वरुं

नाम रशन यामवगूहति । यदि यूपैकादशिनी स्यात्—एवं स्वमेवावगूहेदविपर्यासम् ॥ यूपस्य यन्निखातं स एको भागः ऊर्ध्वं निखाता दारशनायै द्वितीयः । ऊर्ध्वं रशनाया आ चषालात् तृतीयः । ऊर्ध्वं चषालात् द्व्यङ्गुलं वा त्र्यङ्गुलं वा चतुर्थः ॥ तं वै पूर्वार्द्धे मिनोति । स वा अष्टाश्रिर्भवति । सोऽध्वर्य्युर्यूपशकलमेव जुहोति ॥

यूपैकादशिनी भवति । द्वादश उपशयो भवति वितष्टः । तं दक्षिणत उप निदधाति । इयं यूपैकादशिन्यै संमयनमाहुः श्वः सुत्यायै हन्वेवैके समिन्वन्ति । प्रकृत्रतायै चैत्र श्वः सुत्यायै यूपं मिन्वन्तीत्युचः । तदु तथा न कुर्यात् । अग्निष्ठमेवोच्छ्रयेत् । इदं वै यूपमुच्छ्रित्याध्वर्य्युरापरिव्ययणात् नान्वर्जति । अपरिवीता वा एत एतां रात्रिं वसन्ते । एान्वेव परिचक्षा ॥ प्रातर्वै पशूनालभन्ते प्रातरेवोच्छ्रयेत् । स य उत्तरोऽग्निष्ठात् स्यात् तमेवाग्रे उच्छ्रयेत् । अथ दक्षिणम । अथोत्तरं दक्षिणार्ध्यमुत्तमम् ॥ अथा इतरथाहुः—दक्षिणमेवाग्रेऽग्निष्ठादुच्छ्रयेत् । अथोत्तरम । अथ दक्षिणमुत्तरार्ध्यमुत्तमम ॥ स यो वर्षिष्ठः स दक्षिणार्ध्यः स्यात् । अथ ह्रसीयान । उत्तरार्ध्यो ह्रसिष्ठः ॥ अथ पत्नीभ्यः पत्नीयूपमूच्छ्रयन्ति । तत् त्वाष्ट्रं पशुमालभते । मुष्करो भवति । तं न संस्थापयेत् पर्य्यग्निकृतमेवोत्सृजेत् ॥

---

१४—अग्नीषोमीयः पशुः ।

अथोपाकृत्य पशु, मग्निं मथित्वा नियुनक्ति । तदाहुः—"नोपाकुर्य्यात्, नाग्निं मन्थेत्, रशनामेवादायाञ्जसोपपरेत्याभिधाय नियुञ्ज्यादिति" । तदु तथा न कुर्य्यात् । यथा धर्मं तिरश्चथा चिकीर्षेद्—एवं तत् । तस्मादेतदेवानुपरीयात् ॥ अथ तृणमादायोपाकरोति । पाशं कृत्वा प्रति मुञ्चति । अथ नियुनक्ति । अथ प्रोक्षति । अथोयगृह्णाति । अथाधस्तादुपोक्षति ॥ अथाह—"अग्नये समिध्यमानायानुब्रूहि"—इति । स उत्तरमाघारमाघार्य्यति,असस्पर्शयन् स्रुचौ, पर्य्येत्य, जुह्वा पशुं समनक्ति । त्वालाटे अंसयोः, श्रोण्योः । अथ सादय त स्रुचौ । अथ प्रवराया श्रावयति । अथ द्वितीयमाश्रावयति । द्वौह्यत्र होतारौ भवतः । स मैत्रा वरुणावाहैवाश्रावयात । यजम नंत्वेव प्रवृणीते॥तद् यत्रै तन् प्रवृत्ता होता होतृषदने उपविशति तदुपविश्य प्रसौति । प्रसूतोऽध्वर्य्युः स्रुचावादत्ते ॥ अथाप्रीभिश्चरन्ति । ते वा एत एकादश प्रयाजा भवन्ति । स अश्राव्याह—'समिधः प्रेष्य'—इति । प्रेष्य प्रष्यति । चतुर्थेचतुर्थे प्रयाजे समानयमानो दशभिः प्रयाजैश्चरति ॥ दशप्रयाजानिष्ट्वाह—"शास माहर"—इति ॥ असिं वै शास इत्याचक्षते॥ अथ यूप शकलमादत्ते। तावग्रे जुह्वाश्रत्कापशोर्ललाटमुपस्पृशति । पुनर्यूपशकलमवगूहति ॥ 'एषा ते प्रज्ञाता-

श्चिरस्त्वित्याह शासं प्रयच्छन् ॥ सादयति स्रुचौ ॥ अथाह – पर्य्यग्नयेऽनुब्रूहि'–इति ॥ उल्मुकमादायाग्नीत् पर्य्यग्निं करोति। तद् यत्रैनं श्रपयन्ति तदभिपरिहरति। तदाहुः– "पुनरेतदुल्मुकं हरेत्। अथात्रान्यमवाग्निं निर्मथ्य तस्मिन्नेनं श्रपयेयुः। आहवनीयो वा एषः, न वा एष तस्मै, यदस्मिन्न शृतं श्रपयेयुः। तस्मै वा एष-यदस्मिञ्छृतं जुहुयुरिति" ॥ तदु तथा न कुर्य्यात्। एतस्यैवोल्मुकस्याङ्गारान्निमृद्यतस्मिन्नेनं श्रपयेयुः॥ अथोल्मुकमादायाग्नीत् पुरस्तात् प्रतिपद्यते। अथ तमग्निमनु पशुं नयन्ति। तत् परोक्षमन्वारभेत। तं वपा श्रपणीभ्यां प्रतिप्रस्थाताऽन्वारभते। प्रतिप्रस्थातारमध्वर्य्युः। अध्वर्य्युं यजमानः एतदुपरोक्षमन्वारब्धं भवति॥ तदाहुः—नैष यजमानेनान्वारभ्य इति। तदन्वेवारभेत् ॥ अथ स्तीर्णायै वेदेर्द्वेतृणे अध्वर्य्युरादत्ते। स आश्राव्याह—'उप प्रेष्य होतर्हव्या देवेभ्यः'–इति। एतदु वैश्वदेवं पशौ॥ अथ वाचयति—"रेवति यजमाने प्रियं धा आविश, उरोरन्तरिक्षात् सजूर्देवेन वातेन, अस्य हविषस्त्मना यज, समस्य तन्वा भव"–इति ॥ तद् यत्रैनं विशासन्ति तत् पुरस्तात् तृणमुपास्यति। अथ पुनरेत्याहवनीयमभ्यावृत्यासते। तस्य न कूटेन प्रघ्नन्ति, नो एव पश्चात्कर्णम्। अपि गृह्यैव मुखं तमयन्ति. वेष्कं वा कुर्वन्ति। तन्नाह—'जहिमारय'–इति। 'संज्ञपयान्वगन्'–इति ब्रूयात्। तद् यत्रैनं निविध्यन्ति–तत् पुरा संज्ञापनाज्जुहोति। अथ यदा प्राह—'संज्ञप्तः पशु'–रिति; अथ जुहोति। ते वा एते परिपशव्ये इत्याहुती। स यदि कामयेत—जुहुयादेते, यद्यु कामयेत- अपि नाद्रियेत ॥ यदा प्राह—'संज्ञप्तः पशु'–रिति। अथाध्वर्य्युराह—'नेष्टः पत्नीमुदानय'–इति। उदानयति नेष्टा पत्नीं पान्नेजनं बिभ्रतीम् ॥ तां वाचयति—"नमस्त आतान अनर्वाप्रेहि, घृतस्य कुल्या उपऋतस्य पथ्या अनु, देवीरापः शुद्धावोढ्वं सुपरिविष्टा देवेषु सुपरिविष्टा वयं परिवेष्टारोभूयास्म"–इति ॥ अथ पशोः प्राणनद्भिः पत्न्युपस्पृशति। अथ या आपः परिशिष्यन्ते, अर्द्धां वा यावत्यो वा ताभिरेनं यजमानश्च शीर्षतोऽग्रेऽनुषिञ्चतः जघनेन पशुं निनयतः। अथोत्तानं पशुं पर्य्यस्यन्ति सतृणमन्तर्दधाति। अथासिनाभिनिदधाति। सा या प्रज्ञाताश्रिः, तयाभिनिदधाति। तद् यदग्रं तृणस्य, तत् सव्ये पाणौ कुरुते। अथ यद् बुध्नं तद्दक्षिणेनादत्ते। स यत्राद्धर्षति यत एतल्लोहितमुत्पतति तदुभयतोऽनक्ति। तदुपास्याभितिष्ठति। अमूलमुभयतः परिच्छिन्नं भवति। अथ वपामुत्खिदन्ति। तया वपाश्रपण्यौ प्रोर्णौति। काष्मर्य्यमय्योवपाश्रपण्यौ भवतः। तां परिवासयति। तां पशुश्रपणे प्रतपति। तथो ह्यस्यात्रापि शृता भवति। पुनरुल्मुकमग्नीदादत्ते। ते जघनेन चात्वालं यन्ति। त आयन्त्यागच्छन्ति आहवनीयम्। स एतत् तृणमध्वर्य्युराहवनीये प्रास्यति। अथोत्तरतस्तिष्ठन् वपां प्रतपति। तामन्तरेण यूपं चाग्निं च हरन्ति। दक्षिणतः परीत्य प्रतिप्रस्थाता

श्रपयति । अथ स्रुवेणोपहत्याज्यमध्वर्युर्वपामभि जुहोति । अथाह—'स्तोकेभ्योऽनुब्रूहि'—इति । स आग्नेयीं स्तोकेभ्योऽन्वाह । यदा शृता भवति, अथाह 'प्रतिप्रस्थाता, शृता—प्रचर'—इति । स्रुचावादायाध्वर्युरतिक्रम्याश्राव्याह—'स्वाहाकृतिभ्यः प्रेष्य'—इति । वषट् कृते जुहोति ॥ हुत्वा वपामेवाग्रेऽभिघारयति । अथ पृषदाज्यम् ॥ तदुहचरकाध्वर्य्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति । न तदाद्रियेत ॥ अथाज्यमुपस्तृणीते । अथ हिरण्य शकलमवदधाति । अथ वपामवद्यन्नाह—"अग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहि"—इति ॥ अथ हिरण्य शकलमवदधाति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति आश्राव्याह—'अग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्य'—इति । न प्रस्थितमित्याह प्रसुते प्रस्थितमिति ॥ वषट् कृते जुहोति । हुत्वा वपां समीच्यौ वपाश्रपण्यौ कृत्वाऽनुप्रास्यति । अथ चात्वालेमार्जयन्ते ॥

यद्देवत्यः पशुर्भवति तद्देवत्यं पुरोडाशमनुनिर्वपति ॥ अथ पशुं विशास्ति त्रिः प्रच्यावयतात्, त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुतात् ॥ अथ शमितारं संशास्ति । यत्वा पृच्छात्—'शृतं हविः शमिता३रिति शृतमित्येव ब्रूतात् न शृतं भगवः, न शृतं हि'—इति ॥ अथ जुह्वा पृषदाज्यम्योपहत्याध्वर्युरुपनिष्क्रम्यत्रिष्कृत्वः पृच्छति । 'शृतं हविः शमिता३रिति'। शृतमित्याह । तद्देवानामित्युपांशवध्वर्युः । स हृदयमेवाग्रेऽभिघारयति । उद्वासयन्ति पशुम् ॥ तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति । दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यति । प्लक्षशाखा उत्तरबर्हिर्भवन्ति ता अध्यवद्यति । अथाज्यमुपस्तृणीते । जुह्वां चोपभृति च वसाहोमहवन्यां समवत्तधान्याम । अथ हिरण्य शकलाववदधाति जुह्वां चोपभृति च ॥ अथ मनोतायै हविषोऽनुवाच आह । स मध्यतः सतो हृदयस्यैवाग्रेऽवद्यति, अथ यथापूर्वम् । अथ जिह्वायै । अथ वक्षसः । अथैकचरस्यदोष्णः । अथ पार्श्वयोः । अथ तनिम्नः । अथ वृक्कयोः गुदं त्रेधा करोति । स्थविमोपयड्भ्यो, मध्यं जुह्वां द्वेधा कृत्वाऽवद्यति, अणिम त्र्यङ्गेषु । अथैकचरायै श्रोणेः । एतावन्नुजुह्वामवद्यति । अथोपभृति त्र्यङ्गस्य दोष्णोगुदंद्वेधाकृत्वाऽवद्यति । त्र्यङ्ग्यायै श्रोणेः । अथ हिरण्यशकलाववदधाति । अथोपरिष्टादाज्यस्याभिघारयन्ति ॥ अथ वसाहोमं गृह्णाति । अथापरिष्टाद् द्विराज्यस्याभिघारयति ॥ अथ पार्श्वेन वासिना वा प्रयौति । अथ यद्यूष्परिशिष्यते तत्समवतधान्यामानयति तद्धृदयं प्रास्यति, जिह्वां, वक्ष, स्तनिम, मतस्ने, वनिष्ठुम् । अथोपरिष्टाद् द्विराज्यस्याभिघारयति ॥ अदणयाऽवद्यति सव्यस्य च दोष्णो दक्षिणायाश्च श्रोणेः । दक्षिणस्य च दोष्णः सव्यायाश्च श्रोणेः । न शीर्ष्णोऽवद्यति नासयोर्नानूकस्य नापरसक्थयोः ॥ अथाह—"अग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहि"—इति । आश्राव्याह—'अग्नीषोमाभ्यां छागस्य हविः प्रेष्य'—

इति। न प्रस्थितमित्याह। प्रसुते प्रस्थितमिति ॥ अन्तरेणार्ध्वर्चौ याज्यायै वसाहोमं जुहोति। वषट् कृते जुहोति यानि जुह्वामवदानानि भवन्ति। अथ जुह्वा बृषदाज्यस्योपघ्नान्नाह—'वनस्पतयेऽनुब्रूहि'-इति आश्राव्याह—'वनस्पतये प्रेष्य'-इति। वषट् कृते जुहोति। अन्तरेणाभे आहुती जुहोति ॥ अथ यान्युपभृत्यवदानानि भवन्ति तानि समानयमान आह—'अग्नये स्विष्टकृतेऽनुब्रूहि'-इति। आश्राव्याह—'अग्नये स्विष्टकृते प्रेष्य'-इति। वषट् कृते जुहोति। अथ यद्वसाहोमस्य परिशिष्यते तेन दिशो व्याघारयति। अथ पशुं संमृशति ॥ एतर्हि संमर्शनस्यकालः। अथ यत्पुरा संमृशति य इमे उपतिष्ठन्ते ते विमथिष्यन्ते इति शङ्कमानः यद्यु विमाथान्न शङ्केत—अत्रैव समृशेत् ॥ अथ पृषादाज्यं गृह्णाति। तेन पुरस्तादनुयाजेषु चरति। तेन पश्चादुपयजति। तद्वा एतदेको द्वाभ्यां वषट् करोति—अध्वर्यवे च, यश्चैष उपयजति। अथात्युपयाजति। अथ मुखं विमृष्टे ॥ अथ जाघन्या पत्नीः सं याजयन्ति। अन्तरतो देवाना पत्नीभ्योऽवद्यति। अथ हृदयशूलेनावभृथं यन्ति। परितृद्यैव शूलाकुर्यात्। त्रिः प्रच्युते पशौहृदयं प्रवृह्योत्तमं प्रत्यवदधाति अथ हृदयशूलं प्रयच्छति। तन्न पृथिव्यां परास्येन्नाप्सु। अप एवाभ्यवेत्य यत्र शुष्कस्य चार्द्रस्य च सन्धिः स्यात् तदुपगूहेत्। यद्यु अभ्य वापनाय ग्लायेत्—अग्रेण यूपमुदपात्रं निनीय यत्र शुष्कस्य चार्द्रस्य च सन्धिर्भवति तदुपगूहति। अथाभिमन्त्रयन्ते—"सुमित्रियान आप ओषधयः सन्तु, दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः"-इति ॥ स वै शूलोपगूहनं नाग्नषोमीयस्य पशोः कराति, नाग्नेयस्यवशाया एवानुवन्ध्यायै ॥

---

## १—अथ पश्वेकादशिनी।

एकादशिन्या यजेत। स आग्नेयं प्रथमं पशुमालभते। अथ सारस्वतम्। अथ सौम्यम्। अथ पौष्णम्। अथ वार्हस्पत्यम्। अथ वैश्वदेवम्। अथैन्द्रम्। अथ मारुतम्। अथैन्द्राग्नम्। अथ सावित्रम्। अथ वारुणमन्तत आलभते ॥ यदि यूपैकाशिनी स्याद्-आग्नेयमेवाग्निष्ठेनिज्याद्-अथेतरान् व्युपनेयुर्यथा पूर्वम ॥ यद्युपश्वेकादशिनी स्यात्-आग्नेयमेव यूपे आलभेरन्-अथेतरान् यथा पूर्वम्। तान् यत्रोदीचोनयन्ति—आग्नेयमेव प्रथम नयन्ति-अथेतरान् यथापूर्वम् ॥ तान् यत्र निविष्यन्ति-आग्नेयमेव प्रथमं दक्षिणार्ध्यं निविष्यन्ति-अथेत्तरानुदीचोऽतिनीय यथा पूर्वम। तेषां यत्र वपाभिः प्रचरन्ति, आग्नेयस्यैव प्रथमस्य वपया प्रचरन्ति-अथैतरेषा यथा पूर्वम्। तैर्यत्र प्रचरन्ति-आग्नेयेनैव प्रथमेन प्रचरन्ति, अथेतरैर्यथापूर्वम् ॥

---

## २—वसतीवरीसंज्ञकानामपां ग्रहणम् ।

स वसतीवरी रच्छैति । ता वै सर्वेषु सवनेषु विभजति । ता वै स्यन्दमानानां गृह्णीयान् ॥ दिवा गृह्णीयात् । स पुरादित्यस्यास्तमयाद् वसतीवरीर्गृह्णाति स एन्द्रविः प्रविशन्ति त एतासु वसतीवरीषूपवसन्ति स उपवसथः । स यस्या गृहीता अभ्यस्तमियात् तत्र प्रायश्चित्तिः क्रियते । स यदि पुरे जानः स्यात्—निनाह्याद् गृह्णीयात् । दिवा हि तस्य ताः पुरा गृहीता भवन्ति ॥ यद्य अनीजानः स्यात्—य एन मीजान उपावसितो वा पर्य्यवसितो वा स्यात् तस्य निनाह्याद् गृह्णीयात् । दिवाहि तस्य ताः पुरा गृहीता भवन्ति ॥ यद्यु एतदुभयं न विन्देत्—इल्कुषीमेत्रादायोपपरेयात् । तामुपर्य्यु परि धारयन् गृह्णीयात् ! हिरण्यं वो पर्य्यु परि धारयन् गृह्णीयात् । अथातो गृह्णाति । ता आहृत्य जघनेन गार्हपत्यं सादयति ॥ अथ यदाग्नीषोमीयः पशुः संतिष्ठते, अथ परिहरति व्युत्क्रमतेत्याह । अग्रेण हविर्धाने यजमान आस्ते ता आदत्ते । स दक्षिणेन निष्क्रामति । ता दक्षिणायां श्रोणौ सादयति । ताः पुनराहृत्याग्रेण पत्नीं सादयति । स जघनेन पत्नीं पर्य्येत्य ता आदत्ते ॥ स उत्तरेण निष्क्रामति । ता उत्तराय श्रोणौ सादयति । ता आग्नीध्रे सदयति ॥ तानि वा एतेषां सप्त यजूंषि भवन्ति—चतुभिर्गृह्णाति, एकेन जघनेन गार्हपत्यं सादयति, एकेन परिहरति, एकेनाग्नीध्रे ॥

---

## ३—सुत्यादिवसे प्रातःसवनीय पश्वर्थ प्रयोगः ।

### तत्रादाविभिषवसाधनानामपां परिग्रहः ।

तान् स प्रबोधयन्ति । तेऽप उपस्पृश्याग्नीध्रमुपसमायन्ति । त आज्यानिगृह्णते । गृहीत्वाज्यान्यायन्ति—आसाद्याज्यानि ॥ अथ राजनमुपावहरति । अन्तरेणोषे उपावहरति । ग्रावसु संमुखेष्वधिनिदधाति । अथानुसृज्योपतिष्ठते । उपसन्नोहोता प्रातरनुवाकमनुवक्ष्यन् भवति । अथ समिधमभ्यादधदाह— 'देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि"—इति ॥ होता प्रातरनुवाकमन्वाह । तदाहुः—कः प्रातरनुवाकस्य प्रतिगर इति । जाग्रद्वैवाध्वर्य्युरुपासीत, स यन्निमिषति स हैवास्य प्रतिगरः । तदु तथा न कुर्य्यात् । यदि निद्रायाद् अपि काम स्वप्यात् ॥ स यत्र होता प्रातरनुवाकं परिदधाति तत् प्रचरणीति स्रुग् भवति तस्यां चतुर्गृहीतमाज्यं गृहीत्वा जुहोति॥ अथापरं चतुर्गृहीतमाज्यं गृहीत्वा उदङ् प्रयन्नाह—"आप इष्य होतः"—इति । अथ सम्प्रेष्यति । "मैत्रावरुणस्य चमसाध्वर्य्युवेहि, नेष्टः पत्नीरुदायनयै, कथनिन एता, ग्नीद्यात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन च"—इति ॥ त उदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रम् ॥

स यस्तां ततो दिश्यापो भवन्ति तद् यन्ति । ते वै सह पत्नीभिर्यन्ति ॥ सोऽपोऽभि जुहोति । अथ मैत्रावरुण चमसेनैतामाहुतिमपप्लावति । अथैतेन मैत्रावरुण चमसेनो-न्नयति, तदन्वेकधनानुन्नयन्ति, तदनुपात्रेजनान् ॥ त आयन्ति । प्रत्युपतिष्ठतेऽग्नी-चात्वाले वसतीवराभिश्च होतृ चमसेन च ॥ स उपर्युपरि चात्वाल संस्पर्शयति वसती-वराश्च मैत्रावरुणचमसं च ॥ तद्धैके—ऐत्र मैत्रावरुण चमसे वसतीवरीन्नयन्ति, आ मैत्रावरुणचमसाद् वसतीवरीषु । तदु तथा न कुर्य्यात् ॥ अथ होतृ चमसे वसतीवरी-र्गृह्णाति निग्राभ्याभ्यः ॥ त आयन्ति । त होता पृच्छति—'अध्वर्य्यो ! अवरेया३ इति' । तं प्रत्याह—'उतेवनं नमुः'–इति ॥ स यद्याग्नष्टोमस्याद्—यदि प्रचरण्यां सं स्रवः परिशिष्टोऽलं होमाय स्यात् तं जुहुयात् । यद्यु नाल होमाय स्यात्–अपरं चतु-र्गृहीतमाज्यं गृहीत्वा जुहोति ॥ अथ यद्युक्थ्यः स्यात्—मध्यमं परिधिमुपस्पृशेत् ॥ यद्यु अतिरात्रो वा षोडशी वा स्यात्—नैव जुहुयान्न मध्यमं परिधमुपस्पृशेत् । समुद्यैव तूष्णीमेत्य प्रपद्येत । ( तद् यथा यथं यज्ञक्रतून व्यावर्तयति । ) ॥ अयुङ्गा अयुङ्गा एकधना भवन्ति—त्रयो वा पञ्चवाऽग्निष्टोमेऽत्यग्निष्टोमे च । पञ्च वा सप्त वोक्थ्ये । सप्त वा नव वा षोडशिनि । नववैकादश वा वाजपेये । एकादश वा त्रयोदश वाऽतिरात्रे । त्रयोदश वा पञ्चदश वाऽप्तोर्यामे-इति ॥

---

## ४ सोमाभिषव प्रयोगः ।

अथाधिषवणोपर्य्युपविशन्ति । अथास्वां हिरण्यं बध्नीते अथ ग्रावाणमादत्ते । अथ वाचं यच्छति । अथ निग्राभ्या आहरति । ता स्वेन वाचयति—'निग्राभ्याः स्थ, देवश्रुतस्तर्पय मा, मनो मे तर्पयत, वाचं मे तर्पयत, प्राणं मे तर्पयत, चक्षुर्मे तर्पयत, श्रोत्रं मे तर्पयता, त्मानं मे तर्पयत, प्रजां मे तर्पयत पशुन्मे तर्पयत, गणान्मे तर्पयत, गणा मे मा वितृषन्"–इति ॥ उपांशुसवनमभि सोमं पञ्चकृत्वः मिमीते । तमभि-मृशति । अथ निग्राभ्याभिरुपसृजति । अथ प्रहरिष्यन् यं द्विष्यात् तं मनसा ध्यायेत्–"अमुष्मै अहं प्रहरामि न तुभ्यमिति" । यद्यु न द्विष्यात्–अवितृणमेव मनसा ध्यायेत् ॥ स प्रहरति ॥ अथ निग्राभमुपैति ॥ अथ निग्राभ्याभ्यो ग्राहान् विगृह्णते होतृ-चमसात् ॥

---

## १५—ग्रहयागः ।

### १—अथ प्रातःसवनीयाः षोडशग्रहाः ।

| | | | |
|---|---|---|---|
| १—उपांशुः १ | ५—मैत्रावरुणः ४ | ९—आग्रयणः ७ | १३—आधवनीयः |
| २—उपांशुसवन | ६—आश्विनः ५ | १०—उक्थ्यः ८ | १४—ऋतुग्रहाः १४ |
| ३—अन्तर्यामः २ | ७—शुक्रः } ६ | ११—ध्रुवः ९ | १५—ऐन्द्राग्नः १५ |
| ४—ऐन्द्रवायवः ३ | ८—मन्थी } | १२—पूतभृद्ग्रहः | १६ वैश्वदेवः १६ |

### २—अथ मध्यन्दिनसवनीयाः ग्रहाः ।

| | | | | |
|---|---|---|---|---|
| शुक्रामन्थिनौ | आग्रयणः | मरुत्वतीयः | उक्थ्यः | माहेन्द्रः |

### ३—अथ सायंसवनीयाः ग्रहाः ।

| | | | | | |
|---|---|---|---|---|---|
| आदित्यः १ | दधि २ | सावित्रः ३ | वैश्वदेवः ४ | पात्नीवतः ५ | हारियोजनः ६ |
| अतिग्राह्यः ७ | आदाभ्यः ८ | ऐन्द्रः ९ | | | |

### १—प्रातःसवनं ग्रहाः ।

(१) उपांशुः । (२) उपांशुसवनः ।

अथोपांशुं बहिः पवित्राद् गृह्णाति स वा अष्टौकृत्वोऽभिषुणोति । स गृह्णाति । अथैकादशकृत्वोऽभिषुणोति स गृह्णाति ॥ अथ द्वादशकृत्वोऽभिषुणोति स गृह्णाति ॥

अथ जुहोति ॥ अष्टावष्टौ कृत्वो ब्रह्मवर्चसकामस्याभिषुणुयादित्याहुः। पञ्चपञ्च कृत्वः पशुकामस्याभिषुणुयादित्याहुः। सो एषा मीमांसैव, इतरं त्वेव क्रियते तं गृहीत्वा परिमार्ष्टि, तं न सादयति। यदीत्वभिचरेत्—अथैनं सादयेत्। "अमुष्य त्वा प्राणं सादयामि"-इति। तथाह तस्मिन्न पुनररित यन्नानुसृजति तेनो अध्वर्युश्च यजमानश्च ज्योग् जीवतः। अथो अप्ये वैन दध्यात्। "अमुष्य त्वा प्राणमपि दधामि"—इति। तथाह तस्मिन्न पुनररित यन्न सादयति। तेनो प्राणान्न लोभयति। स वा अन्तरेवसन् स्वाहेति करोति। अथोपनिष्क्रामति। अथ वरं वृणीते स जुहोति। अथ हुत्वोर्ध्वं ग्रहमुन्मार्ष्टि। अथोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि॥ तस्य वा एतस्य ग्रहस्य नानुवाक्यास्ति न याज्या। तं मन्त्रेण जुहोति। अथ यद्यभिचरेत्—योऽस्यांशुराश्लिष्टः स्याद्—बाह्वोर्वोरसि वा वाससित्रातं जुहुयात्॥ तं सादयति। दक्षिणार्द्धे हैके सादयति। तदु तथा न कुर्यात्। उत्तरार्द्धे एवैनं सादयेत् तं सादयति॥ अथोपांशुसवनमादत्ते। तं न दशाभिर्न पवित्रेणोपस्पृशति। यद्यंशुराश्लिष्टः स्यात्—पाणिनैव प्रध्वंस्योदञ्चमुपनिपादयेत्॥

---

(३) अन्तर्यामः।

अथन्तर्याममन्तः पवित्राद् गृह्णाति। उपयामेन ग्रहा गृह्यन्ते। अथ योनौ सादयति। एतयोर्ग्रहयोरुदितेऽन्यतरं जुहोति, अनुदितेऽन्यतरम्। अथातो गृह्णाति तं गृहीत्वा परिमार्ष्टि। तं न सादयति। यदीत्वभिचरेत्-अथैनं सादयेत—"अमुष्यन्वोदानं सादयामि"—इति। स यद्युपांशुं सादयेत्—अथैनं सादयेत्॥ यद्यु उपांशुं न सादयेत् नैनं सादयेत॥ यद्युपांशुमपि दध्यात्—अप्येनं दध्यात्। यद्युपांशुं नापि दध्यात् नैनमपि दध्यात्। यथोपांशोः कर्म तथैतस्य॥ ता उ ह चरकाः—नानैव मन्त्राभ्यां जुह्वति। तदु तथा न कुर्यात्। स येनैवोपांशुं मन्त्रेण जुहोति तेनैवैतं मन्त्रेण जुहोति॥ अथ हुत्वाऽवाञ्चं ग्रहमवमार्ष्टि। अथ नीचापाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि॥ तं प्रत्याक्रम्य सादयति। तानि वै संस्पृष्टानि सादयति। तानि वा अनिङ्गयमानानि शेरे आतृतीयसवनात्। तानि पुनस्तृतीयसवने प्रयुज्यन्ते॥

---

(४) ऐन्द्रवायवः ।

ऐन्द्रवायवस्य वै प्रहस्य द्वे पुरोरुचौ, द्वे अनुवाक्ये, द्वौ प्रेषौ, द्वे याज्ये । सर्वत्राप्येतासु वायव्यैव पूर्वा, ऐन्द्रवायव्युत्तरा । तत एष ऐन्द्रतुरीयो ग्रहः । तं गृह्णाति । अथावगृह्य पुनरा नयति । सादयति ॥

———

(५) मैत्रावरुणः ।

अथातो मैत्रावरुणं गृह्णाति । तं पयसा श्रीणाति । सादयति ॥

———

(६) आश्विनः ।

स्तुतेबहिः पवमाने आश्विनो ग्रहो गृह्यते । अथातो गृह्णाति । सादयति ॥

———

(७-८) शुक्रामन्थिनौ ।

शुक्रं गृह्णाति । सादयति ॥ अथ मन्थिनं गृह्णाति । तं सक्तुभिः श्रीणाति । सादयति ॥ द्वौ प्रोक्षितौ यूपशकलौ भवतः । द्वाव प्र क्षितौ । प्रोक्षितं चैवाध्वर्य्युरादत्ते, अप्रोक्षितं च एवमेव प्रतिप्रस्थाता प्रोक्षितं चैवादत्तेऽप्रोक्षितं च । शुक्रमेवाध्वर्य्युरादत्ते, मन्थिनं प्रतिप्रस्थाता । सोऽध्वर्य्युरप्रोक्षितेन यूपशलेनापमार्ष्टि । एवमेव प्रतिप्रस्थाता । अध्वर्य्युर्निष्क्रामति । प्रतिप्रस्थाता च । तौ जघनेनाहवनीयमरत्नी संधत्तः । ता उत्तरवेदौ सादयतः । दक्षिणापामेव श्राणावध्वर्य्युः स दयति । उत्तरायां प्रतिप्रस्थाता । अननुसृजन्तावेव विपर्य्येष्यन्तो वा एतावग्निं भवतो ऽन्वेष्यन्तौ । सोऽध्वर्य्युः पर्य्येति अथ प्रतिप्रस्थाता पर्य्येति । तावपिधाय निष्क्रामतः । तौ पुरस्तात् परीत्यापोर्णतः । पुरस्तात् तिष्ठन्तौ जुहुतः । तौजघनेन यूपमरत्नी संधत्तोयद्यग्निर्नोद्धावेत । यद्यु अग्निरुद्धावेत–अप्यग्नेरेव यूपमरत्नी सदध्यताम् ॥ सोऽध्वर्य्युरप्रोक्षितं यूपशकलं निरस्यति । एवमेव प्रतिप्रस्थाता । अथाध्वर्य्युः प्रोक्षितं यूपशकल माहवनीये प्रास्यति । एवमेव प्रतिप्रस्थाता । तत्र जपति–"अच्छिन्नस्य ते देव सोम सुवीर्य्यस्य रायस्पोषस्य ददितारः स्याम"–इति ॥ अथा श्राव्याह—"प्रातः प्रातः सवनस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य"–इति । वषट् कृतेऽध्वर्य्युर्जुहोति । तदनु प्रति प्रस्थाता । तदनु

चमसाध्वर्यवः ॥ तौ वै पुरस्तात् तिष्ठन्तौ जुहुतः। स जुहोति। अथ संप्रेष्यति। "प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातृणां प्र यजमानस्य प्रयन्तु सदस्यानां होत्राणां चमसाध्वर्य्य उपावर्तध्वं शुक्रस्याभ्युन्नयध्वम्-" इति ॥ पर्य्येत्य प्रतिप्रस्थाताऽध्वर्य्योः पात्रे संस्रवमवनयति। तमध्वर्य्युर्होतृचमसेऽवनयति भक्षाय ॥ अथ होत्राणां चमसानभ्युन्नयन्ति। अथ होत्राः संयाजयन्ति। स प्रथमायां वा होत्रायामिष्टाया मुत्तमायां वानुमन्त्रयते। अथेत्य प्रत्यङ्ङुपविशति ॥

---

(९) आग्रयणः।

अथ विश्वेभ्यो देवेभ्यः सर्वेषुसत्रनेष्वाग्रयणं स्थाल्या गृह्णाति पूर्णम् ॥ ( सयदि राजोपदस्येत् तमत एव तन्वीरन् अतः प्रभावयेयुः ) ॥ अथ दशा पवित्र मुपगृह्यहिङ्करोति त्रिष्कृत्वः। अथाह-"सोमः पवतेऽस्मै ब्रह्मणेऽस्मै क्षत्रायास्मै सुन्वते यजमानाय पवते, इष ऊर्जे पवतेऽद्भ्यः ओषधीभ्यः पवते, द्यावा पृथीवीभ्यां पवते, सुभूताय पवते-" इति ॥ तदुहैकआहुः-'ब्रह्मवर्चसाय पवते' इति। तदु तथा न ब्रूयात् ॥ तं वै मध्ये सादयति। दक्षिणोक्थ्यस्थाली भवति, उत्तरादित्यस्थाली ॥

---

(१०) उक्थ्यः।

अथोक्थ्यं स्थाल्या गृह्णाति पूर्णम्। अथ राजानमुपावहरति। तृतीयं वसतीवरीणामवनयति तत्पत्रे समैति। प्रथममह्नोत्तरस्य सवनस्य करोति, उत्तमं पूर्वस्य। तं वा अपुरोरुक्थं गृह्णाति। सादयति। तं विगृह्णाति ॥

---

(११) ध्रुवः।

अथ वैश्वानराय ध्रुवं स्थाल्या गृह्णाति पूर्णम्। स प्रातः सवने गृहीत ऐतस्मात् कालादुपशेते तदेनं सर्वाणि सवनान्यतिनयति। तं न स्तूयमानेऽवनयेत्। तं शस्यमानेऽवनयति। तदेनं द्वादश स्तोत्रमतिनयति। ब्राह्मणोऽग्निष्टोमसत् स्यादेतस्य होमात् न सर्पेत्, न प्रस्रावयेत ॥ तं गृहीत्वोत्तरे हविर्धाने सादयति। उपकीर्णे वा इतरान् ग्रहान् सादयति-अथैत व्युह्य, न तृणं च नान्तर्धाय। तद्वा एतदाहवनीये जुहति-पुरोडाशं

धानाः करम्भं दध्यामिक्षामिति । अथैष एकरूप उपशेते आप इवैव ॥ द्वादश स्तोत्राणि द्वादश शस्त्राणि । अथाध्वर्य्युश्च प्रतिप्रस्थाता च निश्चक्रामतः प्र च पद्येते । एतं ग्रह मुपाचरतः तमवनयति । अथातो गृह्णाति । सादयति व्युह्य न तृणं च नान्तर्धाय ॥

ग्रहान् गृहीत्वा उपनिष्क्रम्य विप्रुषां होमं जुहोति । अथ स्तीर्णायै वेदे द्वैतृणे अध्वर्य्युरादत्ते, ( तावध्वर्य्युं प्रथमौ प्रतिपद्येते )। अथ प्रस्तोता, अथोद्गाता, अथ प्रतिहर्ता । तान् वा एतान् पञ्चर्त्विजो यजमानोऽन्वारभते ॥ अथान्यतरत् तृणं चात्वालमभिप्रास्यति । अथान्यतरत् तृणं पुरस्तादुद्गातॄणामुपास्यति तूष्णीमेव ॥ अथ यदा जपन्त्युद्गातारः—अथ परागेवस्तोत्रमुपाकरोति । बहिः पवमानेन स्तुवते । अथ स्तुत एवं वाचं वदति—'अग्नीदग्नीन् विहर, बर्हिस्तृणीहि, पुरोडाशाँ२॥ अलं कुरु, पशुनेहि"–इति ॥ अथ पुनः प्रपद्य–आश्विनं ग्रहं गृह्णाति । आश्विनं ग्रहं गृहीत्वोप–निष्क्रम्य यूपं परिव्ययति । परिवीय यूपं पशु मुपाकरोति ॥ स प्रातः सवने आलब्ध आतृतीयसवनाच्छ्रप्यमाण उपशेते ॥ आग्नेयमग्निष्टोम आलभेत । यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेत । यदि षोडशी स्यादैन्द्रं तृतीयमालभेत । यद्यतिरात्रः स्यात् सारस्वतं चतुर्थमालभेत ॥ तद् यथायथं यज्ञक्रतून् व्यावर्तयति ॥ अथ सवनीयैः पुरोडाशैः प्रचरति । गायत्री वै प्रातःसवनं वहति स्तोत्रपङ्क्त्या च हविः पङ्क्त्या च ॥ चत्वार्य्याज्यानि बहिष्पवमानं पञ्चमंसैषा स्तोत्रपङ्क्तिः ॥ पुरोडाशोधानाः करम्भोदध्यामिक्षेति सैषा हविः पङ्क्तिः । अथैषा प्रातः सवन एव मैत्रावरुणी-पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः ॥

---

## (१२) ऋतुग्रहाः ।

भक्षयित्वा 'समुपहूताः स्मः'—इत्युक्त्वोत्तिष्ठन्ति पुरोडाशवृगलमादाय । तद् यत्रै तदुपसन्नोऽच्छावाकोऽन्वाह तदस्मै पुरोडाशावृगलंपाणावादधदाह—"अच्छावाक ! वदस्व यत्ते वाद्यम्"—इति ॥ स वै सन्नेऽच्छावाके ऋतुग्रहैश्चरति ॥ तान् वै द्वादश गृह्णीयात्–अथो अपि त्रयोदश गृह्णीयात् । द्वादशत्वेव गृह्णीयात् ॥ द्रोणकलशाद्गृह्णाति । उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति । तं गृहीत्वा न सादयति । नानुवाक्यामन्वाह । नानुवषट् करोति । स हैव प्रथमौ ग्रहौ गृहीतः । सहोत्तमौ । निरेवान्यतरः क्रामति, प्रान्यतरः पद्यते । तौ वा ऋतुनेति षट् प्रचरतः । तौ वा ऋतुनेति षट् प्रचर्य्य इतरथा पात्रे विपर्य्यस्येते । अथातोगृह्णाति । मधवे, शुक्राय, नभसे, इषे, सहसे, तपसे. इत्यध्वर्य्युः । माधवाय, शुचये, नभस्याय ऊर्जेसहस्याय, तपस्याय—इति प्रतिप्रस्थाता ।

बृहस्पतये'—इति त्रयोदशं ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयात् ।। अथ प्रतिप्रस्थाताऽ-ध्वर्य्योः पात्रे संस्रवमवनयति । अध्वर्य्यु र्वा प्रतिप्रस्थातुः पात्रे संस्रवमवनयति आहरति भक्षम् ॥

———

(१३) ऐद्राग्नः ।

अथ प्रति प्रस्थाता भक्षितेन पात्रेण ऐन्द्राग्नं ग्रहं गृह्णाति । सादयति ॥

———

(१४) वैश्वदेवः ।

अथ वैश्वदेवं ग्रहं गृह्णाति । शुक्रपात्रेण गृह्णाति । सादयति ॥

———

२—माध्यन्दिनीय सवनग्रहाः ।

सर्वे वा अन्यउद्गातुः प्राञ्च आर्त्विज्यं कुर्वन्ति । होता शंसति, तदध्वर्य्ये रूप पत्स्य प्रतिगृणाति । यद्यर्द्धर्चशः शंसेत्—अर्द्धर्चेऽर्द्धर्चे प्रतिगृणीयात् । यदि पच्छः शंसेत्—पदेपदे प्रतिगृणीयात ॥ गायत्रं प्रातः सवनं, त्रैष्टुभं माध्यन्दिनं सवनं, जागतं तृतीयसवनमिति । तदाहुः—गायत्राणि वै सर्वाणि सवनानि । संसिद्धं प्रातः सवने प्रतिगृणीयात्, सकृन्मद्वन्माध्यन्दिने सवने, त्रिमद्वत् तृतीयसवने ॥ यत्र द्यावापृथिव्यंशस्यते । सवाओ३मित्येव प्रतिगृणीयात ॥ तद्धैके–ओथामो दैववाग्–इति प्रतिगृणन्ति तदुतथा न कुर्य्यात् । ओ३मित्येव प्रतिगृणीयात् ॥

इहा३इहा३-इत्युभिषुणोति, बृहद्बृहदिति ॥ स शुक्रामन्थिनौ प्रथमौ गृह्णाति । अथाग्रयणम् । अथ मरुत्वतीयम् । अथोकथ्यम् ॥ तद्धैके–उकथ्यंगृहीत्वाऽथ मरुत्वतीयं गृह्णन्ति तदुतथा न कुर्य्यात् मरुत्वतीयमेव गृहीत्वाऽथोकथ्यं गृह्णीयात् ॥ तान् वा एतान् पञ्चग्रहान् गृह्णाति । माध्यन्दिनः पवमानः पञ्चदशः पञ्चसामाभवति । आश्वत्थे ऋतुपात्रे स्यातां, काष्मर्यमये त्वेव भवतः । सवा इन्द्रायैव मरुत्वते गृह्णीयात् नापि मरुद्भ्यः ॥ ऋतुमात्राभ्यां गृह्णाति ॥ अथ माहेन्द्रं ग्रहं गृह्णाति ॥ शुक्रपात्रेण गृह्णाति ॥ अथोपाकृत्यै तां वाचं वदति—"अभिषोतारोऽभिषुणुतौलूखलानुद्वादयताग्नीदाशिरं विनय, सौमस्य वितात्"–इति ॥

———

दक्षिणादानम् ।

दक्षिणा ददाति । तद्धै षड् द्वादशेन्येत्र हविर्यज्ञे ददति । न ह त्वेवाशत दक्षिणाः सौम्योऽध्वरः स्यात् ॥ नो हैवाशत दक्षिणेन यजमानस्यर्त्विक् स्यात् ॥ ऋत्विग्भ्य एव दक्षिणाद्द्यान्नानृत्विग्भ्यः ॥ अथ प्रतिपरेत्य गार्हपत्यं दाक्षिणानि जुहोति । स दशाहोमीये वाससि हिरण्यं प्रबध्यावधाय जुहोति ॥ द्विर्जुहोति सौरीभ्यामृग्भ्याम् ॥ अथाग्नीध्रे द्वे वैकां वा जुहोति ॥ अथ यद्यश्व युक्तं वा युक्त वा दास्यन् स्याद्—अथ द्वितीयां जुहुयात्, यद्यु न नाद्रियेत् ॥ अथ हिरण्यमादाय शालामभ्यैति । दक्षिणेन वेदिं दक्षिणा उपतिष्ठन्ते सोऽग्रेण शालां तिष्ठन्नभिमन्त्रयते—"रूपेण वो रूपणमभ्यागाम्, तुथो वो विश्ववेदा विभजतु ऋतस्य पथा प्रेत चन्द्रदक्षिणा"-इति ॥ अथ सदोऽभ्यैति । सदः प्रेक्षते ॥ अथ हिरण्यमादायाग्नीध्रमभ्यैति ॥ अथैवमुपसद्य अग्नीधेप्रथमाय हिरण्यं ददाति[१]। अथैवमेवोपसद्य—आत्रेयाय हिरण्यं ददाति[२]। अथब्रह्मणे[३]। अथोद्गात्रे[४]। अथ होत्रे[५]। अथाध्वर्युभ्यां हविर्धाने[६] आसीनाभ्याम्[७]॥ अथपुनरेत्य प्रस्तोत्रे[८]। अथमैत्रावरुणाय[९]। अथ ब्राह्मणाच्छंसिने[१०]। अथ पोत्रे[११]। अथ नेष्ट्रे[१२]। अथाच्छावाकाय[१३]। अथोन्नेत्रे[१४]। अथग्रावस्तुते[१५]। अथसुब्रह्मण्यायै प्रतिहर्त्रे[१६] उत्तमाय ददाति। अथाह,"इन्द्रायमरुत्वतेऽनुब्रूहि"-इति। चतस्रो वै दक्षिणाः—अग्नीधे हिरण्यं दीयते। होत्रे गौः। उद्गायते वासः। ब्रह्मणेऽश्वः। स हिरण्यं प्रत्येति। अथ गां प्रत्येति। अथ वासः प्रत्येति अथाश्वं प्रत्येति ॥ अथ यदन्यद्ददाति कामेनैव तद्ददाति। तत्प्रत्येति ॥

---

## ३—सायंसवनग्रहाः ।

### (१) आदित्य ग्रहः ।

संस्थिते एव माध्यन्दिने सवने पुरा तृतीयसवनाद् ग्रहं जुहोति ॥ स यत्र प्रातः सवने द्विदेवत्यैः प्रचरति तत् प्रतिप्रस्थाताऽऽदित्यपात्रेण द्रोणकलशान् प्रति निगृह्णीते। अध्वर्युरेवाश्रावयति । अध्वर्योरनुहोमं जुहोति प्रतिप्रस्थाता । संस्रवमवनयति उत्तरार्द्धे जुहोति ॥ अथाह—"संस्थिते एव माध्यन्दिने सवने पुरा तृतीयसवनादेहि यजमान !"-इति। ते संप्रपद्यन्ते • अध्वर्युश्च यजमानश्च आग्नीध्रश्च प्रतिप्रस्थस्ता च. उन्नेता, अथ योऽन्यः परिचरो भवति ॥ उभे द्वारे अपि दधति । अथाध्वर्युरादित्यस्थालीं चादित्यपात्रं चादत्ते । स उपर्युपरि पूतभृतं विगृह्णाति ।

अथ गृह्णाति । तं वै नोपयामेव गृह्णीयात । अथाप गृह्य पुनरानयति । अथ दधि गृह्णाति । तमुपांशु सवनेन मेक्षयति तं न दशाभिर्न पवित्रेणोपस्पृशति । अथोन्नेत्रे उपांशु सवनं प्रयच्छति । अथाहोन्नेतारम्—"आसु जग्राभ्णः"—इति । तानाधवनीये वा सृजति चमसे वा राजानमुन्नोया ... अपोर्णुवन्ति द्वारे । अथापिधायोपनिष्क्रामन्ति ॥ अथाह –'आदितेभ्योऽनुब्रूहि"—इति । अत्र संपश्येत्—यदि कामयेत आश्राव्यत्वेव संपश्येत् ॥ आदित्येभ्यः प्रेष्य प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः - इति ॥ वषट् कृते जुहोति । नानु वषट् करोति । प्रयच्छति प्रतिप्रस्थात्रे संस्रवौ ॥ अथ पुनः प्रपद्य आग्रयणमादत्ते । उदीचीनदशं पवित्र वितन्वन्ति प्रस्कन्दयत्यध्वर्युराग्रयणस्य संगृह्णाति प्रतिप्रस्थाता संस्रावानयत्युन्नेता चमसेन वादञ्चनेन वा ॥ तं चतसृणांधाराणामाग्रयणं गृह्णाति ॥

---

२—सावित्रग्रहः ॥

सावित्रं गृह्णाति । तं वा उपांशुपात्रेण गृह्णाति । अन्तर्यामपात्रेणवा । आग्रयणाद् गृह्णाति । तं गृहीत्वा न सादयति । अथाह-'देवायस वित्रेऽनुब्रूहि" इति । आथाव्याह-'देवाय सवित्रे प्रेष्य-' इति । वषट् कृते जुहोति । नानु वषट् करोति ।

---

३—वैश्वदेवग्रहः ॥

अथ भक्षितेन पात्रेण वैश्वदेवं ग्रहं गृह्णाति । तंवैपूतभृतो गृह्णाति । तं वा अपुरोरुकं गृह्णाति । सादयति ॥ अथेत्य प्राङुपविशति । स यत्रै तां होता शंसति—"एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशतीच, तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वायविह ता विमुञ्च"—इति । तदे तस्यां वायव्याय मृचि पात्राणि विमुच्यन्ते ॥

सौम्येन चरुणा प्रचरति । तेन न प्रातः सवने प्रचरति न माध्यन्दिने सवने ॥ नानुवाक्यामन्वाह । अथ चतुर्गृहीतमाज्यंगृहीत्वा आश्राव्य ह-'घृतस्य यज'-इति । वषट् कृते जुहोति । स आज्यस्योपस्तीर्य्य द्विश्चरोरवद्यति अथोपरिष्टदाज्यस्याभि घारयति । आश्राव्याह-"सौम्यस्ययज"-इति । वषट् कृते जुहोति ॥ अथापरं चतुर्गृहीतमाज्यं गृहीत्वा ऽऽश्राव्याह-'घृतस्य यज'-इति । वषट् कृते जुहोति ॥ स यदि कामयेत-उभयतः परियजेत्,

यद्यु कामयेत--अन्यतरतः परियजेत ॥ अथ प्रचरणीति स्रुग् भवति । तस्यां चतुर्गृहीतमाज्यं गृहीत्वाऽध्वर्य्युः शालाकै र्धिष्ण्यान् व्याघारयति । तान् यथोपकीर्णं यथा पूर्वं व्याघारयति। मार्जालीय एवोत्तमम् ॥ तद्धैके अग्नीध्रीये पुनराघारयन्ति तदु तथा न कुर्य्यात् , मार्जालीय एवोत्तमम् ॥

## ४—पात्नीवतग्रहः ॥

स यत्राध्वर्य्युः शालाकैर्धिष्ण्यान् व्याघारयति तत् प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति । तं वा उपांशुपात्रेण गृह्णाति यदि सावित्रमुपांशु पात्रेण गृह्णीयात्-अन्तर्याम पात्रेणैतम् ॥ यदि सावित्र मन्तर्य्याम पात्रेण गृह्णीयाद् उपांशुपात्रेणैतम् ॥ तं वा अपुरोरुक्कं गृह्णाति न संप्रति पत्नीभ्यो गृह्णाति । अथ यः प्रचरण्यां संस्रवः परिशिष्टो भवति तेनैनं श्रीणाति । अथाहाग्न त् । "पत्नीवतस्य यज-" इति स उत्तरार्द्धे जुहोति । आहरत्यध्वर्य्युरग्नीधे भक्षम् । स आह-'अध्वर्य्य उपमा ह्वयस्व-' इति तं न प्रत्युपह्वयेत । सं वै प्रत्ये वोवह्वयेत ॥ अथ संप्रेष्यति । "अग्नीन्नेष्टु रुपस्थमासीद नेष्टः पत्नीमुदानय, उद्गात्रा संख्यापय, उन्नेतर्होतुश्चमसमनून्नय, सोमं मातिरीरिचः-" इति यद्यग्निष्टोमः स्यात् यद्युक्थ्यः स्यात्-'सोमं प्रभावय-' इति ब्रयात् । स विभ्रदेवैतत्पात्रमग्नीन्नेष्टु रुपस्थमासीदति ॥ उदानयति नेष्टा पत्नीम् । तामुद्गात्र संख्यापयति ॥

## ५-हारियोजन ग्रहः ॥

अथ हारियोजंगृह्णाति । तंवा अतिरिक्तं गृह्णाति । यदा हि शम्योग्राहअथैनंगृह्णाति । द्रोणकलशेगृह्णाति । तं वा अपुरोरुक्कंगृह्णाति । अथ धाना, आवपति । तस्योन्नेताऽऽश्रावयति । मूर्धन्यभिनिधायाश्रावयति । अथाह-'धाना सोमेभ्योऽनुब्रूहि' इति । आश्राव्याह-'धाना सोमान् प्रस्थितान् प्रेष्य'-इति । वषट्कृतेजुहोति । अनुवषट्कृतेअथधाना-विलिप्सन्ते भक्षाय ॥ तद्धैके होत्रे द्रोणकलशं प्रति पराहरन्ति । तदु तथा न कुर्य्यात् । धाना विलिप्सन्ते भक्षाय ॥ ता न दद्भिः खादेयुः प्राणैरेव भक्षयन्ति ता नाग्नौ प्रकिरेयुः । उत्तर वेदावेवनिवपन्ति ॥ अथपूर्णपात्रान् समवमृशन्ति । यानेकेऽप्सुषोमा इत्याचक्षते । अथ मुखान्युप स्पृशन्ते ॥

नव समिष्ट यजूँषि ॥
तानि वा एतानि नव समिष्ट यजूंषि जुहोति ॥
अवभृथ स्नानम् ॥

सत्रा अवभृथमभ्यवैति । तदपोऽभ्यवहरन्ति । अथ समिष्ट यजूंषि जुहोति । यदेतमभितो भवति तेन चात्वालमुपसमायन्ति, स कृष्णविशाणां च मेखलां च चात्वाले प्रास्यति । अथवाचयति—"

उरुं हि राजा वरुणश्चकार सूर्याय पन्था मन्वेतवाउ । अपदे पादा प्रतिधातवेऽक रुतापवक्ता हृदयाविधश्चित् ॥ इति ॥ अथाह-'साम गाय'-इति । 'साम ब्रूहि-' इति वा । गायेतित्वेव ब्रूयात् ॥ आग्नेयां गायति, अतिच्छन्दसि गायति "अग्निष्टपति प्रति दहत्य हावोऽहाव" इति ॥ त उदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रम् । स यस्यां ततो दिश्यापो भवन्ति तद् यन्ति ॥ स यः स्यन्दमानानां स्थावरो ह्रदः स्यात् तमपो ऽभ्यवेयात् । यद्यु ता न विन्देत्-अपि या एव काश्चावापोऽभ्यवेयात् ॥ तमपोऽवक्रमयन् वाचयति "नमो वरुणायाभिष्ठितो वरुणस्य पाश":-इति ॥ अथचतुर्गृहीतमाज्यं गृहीत्वा समिधं ऽस्याभि जुहोति । अथापरं चतुर्गृहीतमाज्यं गृहीत्वा-आश्राव्याह 'समिधोयज'-इति । सोऽप बर्हिषश्चतुरः प्रयाजान् यजति ॥ अथ वारुण एक कपालः पुरोडाशो भवति । स आज्यस्योपस्तीर्य्य पुरोडास्यावद्यन्नाह-'वरुणायानुब्रूहि'-इति । अत्र हैक ऋजीषस्य द्विरवद्यन्ति । तदु तथा न कुर्य्यात ॥ शरीरं वा एतद्भवति नाल माहुत्यै द्विरवद्यति । सकृदभिघारयाति । प्रत्यनक्त्यवदाने । आश्राव्याह 'वरुणं यज'- इति । वषट् कृते जुहोति ॥ अथाज्यस्योपस्तीर्य्य पुरोडाशमवद्यदाह अग्नीवरुणाभ्यामनुब्रूहि"-इति । तत्स्विष्ट कृते । स यद्यमुत्र र्जीषस्य द्विरवद्येद् अथात्र-सकृत् यद्यु न नाद्रियेत । अथोपरिष्टाद् द्विराज्यस्याभिघायति । आश्राव्याह-'अग्नीवरुणौ यज'-इति । वषट् कृते जुहोति । ता वा एताः षडाहुतयो भवन्ति । एतदादित्या नामयनम् ॥ आदित्यानीमानि यजूंषीत्याहुः ॥ स यावदस्य वशः स्याद्-एवमेवचिकीर्षेत् ॥ यद्यु एनमितरथा यजमानः कर्तवैब्रुयात्-इतरथोतर्हिकुर्य्यात् ॥ एतानेव चतुरः प्रयाजानपबर्हिषो यजेद् । द्वावाज्यभागौ । वरुणम् । अग्नीवरुणौ । द्वावनुयाजावपबर्हिषौ ॥ एतदङ्गिरसामयनम् ॥ अतोऽन्यतरत् कृत्वा यस्मिनकुम्भ ऋजीषंभवति तं प्रप्लावयति । अथानुसृज्योपतिष्ठते "देवी राप एष वो गर्भः तंसुप्रीतंसुभृतं बिभ्रत, देवी सोमैष ते लोकः-तस्मिञ्छं च वद्त्व परिचवद्त्व"-इति अथोपमारयति ॥ अथाभ्यवेत्य स्नातः, अन्योऽन्यस्य पृष्ठे प्रधावतः तावन्येवाससीपरिधायेदतः । स ये नैव निष्क्रामति तेन पुनरायन्ति । पुनरेत्याहवनीये समिधमभ्या दधाति ।

उदयनीयेष्टिः ।

आदित्येन चरुणोदयनीयेन प्रचरति । स यदमुत्र राजानंक्रैष्यन उपप्रैष्यन् यजते तस्मात् तत् प्रायणीयं नाम ॥ अथ यदत्रावभृथहुदेत्य यजते । तस्मादेत दुदयनीयं नाम ॥ तद्वाएतत् समानमेव हविः-अदित्या एव प्रायणीय मृहित्या उदयनीयम् ॥ सवै पथ्यामेवाग्रे स्वस्तिंयजते । अथात्र प्रज्ञाते यथा पूर्वं करोति । सोऽग्निमेव प्रथमं यजति,, अथ सोमम्, अथ सवितारम्, अथ पथ्यां स्वस्तिम्, अथदितिम् ॥

---

अनुबन्ध्या पशुबन्ध प्रायश्चित्तरूपः ।

अथ मैत्रावरुणीं वशामनूवन्ध्यामालभते स एषोऽन्य एव यज्ञस्तायते पशुबन्ध एव सभिष्ट यजूंषि ह्येवान्तो यज्ञस्य । यदि वशां न विन्देद्-प्र्युक्षवश एव स्यात् ॥ स यः सहस्रं वा भूयो वा दद्यात् स एताः सर्वा आलभेत- मैत्रावरुणी मेवाग्रे, अथ वैश्वदेवीम्, अथ बार्हस्पत्याम् ॥ अथो ये दीर्घसत्र मासीरन् सवत्सरं वा भूयो वा त एताः सर्वा आलभेरन् ॥

---

उदवसानीयेष्टिः ।

अथोदवसानीय येष्ट्या यजते । स आग्नेयं पञ्चकपालं पुरोडाशं निर्वपति तस्य पञ्चपदाः पंक्तयो याज्यानुवाक्या भवति । तस्य हिरण्यं दक्षिणा । अनड्वान् वा । अथो- चतुर्गृहीतमेवाज्यं गृहीत्वा वैष्णव्यर्चा जुहोति । तत्रो यच्छक्नुयात् तद्दक्षिणां दद्यात् । अथ यदेवैषोदवसानीयेष्टिः संतिष्ठते-अथ सायमाहुतिं जुहोति, काल एव प्रातराहुतिम् ॥

वशामालभन्ते । तामालभ्य संज्ञपयन्ति । सञ्ज्प्याह- "वयामुत् खिद" इति । उत् खद्य वपा मनुमर्शं गर्भमेष्टवै ब्रूयात् । स यदि न विन्दन्ति किमाद्रियेरन ॥ यद्यु विन्दन्ति तत्र प्रायश्चित्तिः क्रियते । न वै तदवकल्पते यदेकां मन्यमाना एकयेवैतथा चरेयुः, यद् द्वे मन्यमाना द्वाभ्यामिवचरेयुः । स्थालींचैवोष्णीषं चोपकल्पयितवै ब्रूयात् ॥ अथ वपया चरन्तियथैव तस्यैचरणम् ॥ वपयाचरित्वाऽध्वर्य्युश्च यजमानश्च पुनरेतः । स आहाध्वर्य्युः—'निरुहेतं गर्भम्'-इति । तं हनोदरतो निरूहेत्, तमपि विरुज्य श्रोणी प्रत्यञ्चं निरूहित वै ब्रूयात । तं निरुह्यमाणमभिमन्त्रयते—"एजतु दशमास्यो गर्भो जरायुणा सह । यथा यं वायुरेजति, यथा समुद्र एजति-एवायं दशमास्यो अस्रज्जरायुणा सह"-इति ॥ तदाहुः कथमेतं गर्भं कुर्य्यादिति । अङ्गादङ्गा- द्वैवास्यावद्येयुर्यथैवेतरेषामवदानानामवदानम् । तदु तथा न कुर्य्यात् । उतह्येषोऽव-

कृताङ्गो भवति, अधस्तादेवग्रीवा अपिकृत्यै तस्यां स्थाल्यामेतं मेधं श्चोतयेयुः, सर्वेभ्यो वा अस्यैषोऽङ्गेभ्यो मेधश्चोतति. तदस्य सर्वेषामेवाङ्गानामवत्तं भवति ॥ अवद्यन्ति वशाया अवदानानि यथैव तेषामवदानम् ॥ तानि पशु श्रपणे श्रपयन्ति तदेवैतं मेधं श्रपयन्ति । उष्णीषेणावेष्ट्य गर्भं पार्श्वतः पशुश्रपणस्योपनिदधाति ॥ यदा शृतो भवति–अथ समुच्चावदानान्येवाभि जुहोति । नैतं मेधम् । उद्वासयन्ति पशुं, तदेवैतं मेधमुद्वासयन्ति ॥ तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति । दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यति । अथ स्रुचोरुपस्तृणीते । अथ मनोतायै हविषोऽनुवाच आह । अवद्यन्ति वशाया अवदानानां – यथैव तेषामवदानम् ॥ अथ प्रचरणीति स्रुग् भवति । तस्यां प्रतिप्रस्थाता मेधायोपस्तृणीते । द्विरवद्यति । सकृदभिधारयति । प्रत्यनक्त्यवदाने । अथानुवाच आह । आश्राव्याह—'प्रेष्य'-इति । वषट् कृतेऽध्वर्युर्जुहोति । अध्वर्यो-रनुहोमं जुहोति प्रतिप्रस्थाता ॥ अथ ध्वर्य्युर्वनस्पतिनाचरति । वनस्पतिनाऽध्वर्य्युश्च-रित्वा यान्युपभृत्य वदानानि भवन्ति तानि समानयमान आह –"अग्नयेस्विष्टकृतेऽनुब्रूहि" –इति अत्याक्रामति प्रतिप्रस्थाता । स एतं सर्वमेवमेधं गृह्णीते । अथोपरिष्टाद् द्विराज्य-स्याभि घारयति । आश्राव्याह–'प्रेष्य'–इति । वषट् कृतेऽध्वर्य्यु र्जुहोति । अध्वर्योरनुहो-मंजुहोति प्रतिप्रस्थाता ॥ तदाहुः कैतंगर्भंकुर्य्यादिति । वृक्षएवैनमुद्दध्युः । ( तदुवा आहुः–य एनं तत्रानुव्याहरेद्–वृक्षएनंमृतमुद्वास्यन्तीति, तथा हैवस्यात् ॥१॥) अप एवैन मभ्यवहरेयुः । ( तदुवा आहुः–य एनं तत्र नुव्याहरेद्—अप्स्वेवपरिष्यतीति, तथा हैव स्यात् ॥२) आखूत्कर एवै न मुपकिरेयुः । (तदुवाआहुः–य एनं तत्रानुव्याहरेत्–क्षिप्रेऽस्मैमृताय श्मशानंपरिष्यन्तीति, तथा हैवस्यात् ॥३) पशु श्रपण एवैनं मरुद्भ्यो जुहुयात ॥ स हुत्वैव समिष्ट यजूंषि प्रथमावशान्तेष्वङ्गारेष्वेतं सोष्णीष गर्भमादत्त, तं प्राङ्-तिष्ठन् जुहोति मारुत्यर्चा । न स्वाहा करोति ॥ अथाङ्गारैरभिसमूहति ॥

इत्यग्निष्टोमः सौम्योऽध्वर एकाहः ॥ १ ॥

---

षोडशिस्तोमः ।

षोडशिनं ग्रहं गृह्णाति ॥ तं वै हरिवत्यर्चा गृह्णाति ॥ हरिवतीषु स्तुवते । हरिवतीरनुशंसति ॥ तं वा अनुष्टुभा गृह्णाति । तं वै चतुः स्रक्तिना पात्रेण गृह्णाति ॥ तं वै प्रातः सवने गृह्णीयात् । आग्रयणं गृहीत्वा स प्रातः सवने गृह्णीत ऐतस्मात् कालादुपशेते; तदेनं सर्वाणि सवनान्यतिरेचयति ॥ माध्यन्दिने वैनं सवने गृह्णीयात्–आग्रयणं गृहीत्वा । सो एषा मीमांसैव, प्रातः सवनएवैनंगृह्णीयादाग्रयणं गृहीत्वा ॥ अथेत्य स्तोत्र मुपाकरोति –'सोमोऽत्यरेच्युपावर्तध्वमिति ॥ तं वै पुरास्तमयादुपाकरोति, अस्तमितेऽनुशंसति ॥

इति षोडशी सौम्योऽध्वरएकाहः ॥

(पृष्ठाः षडहः । विषुवदहः । विश्वजिदहः ॥)

३—प्रातःसवनीयादाग्रयणादूर्ध्वम्–अतिग्राह्यग्रहाः ।

एतानि हवै तेजांसि—अग्नौवर्चः, इन्द्रेओजः सूर्येभ्राजः–स यः कामयते इदमिदं मयि तेजः स्यादिदमिदं मयि वीर्य्यं स्यात् स एतानतिग्राह्यान् ग्रहान् गृह्णीयात् ॥ तान् वै प्रातः सवने गृह्णीयादाग्रयणं गृहीत्वा । माध्यन्दिने वैनान् सवने गृह्णीयात्—उक्थ्यं गृहीत्वा । उपाकरिष्यन् वा पूतभृतः । सो एषा मीमांसैव । प्रातः सवने एवै तान् गृह्णीयादाग्रयणं गृहीत्वा ॥ ते माहेन्द्रस्यैवानु होमं हूयन्ते । तेषां भक्षः ॥ तान वै पृष्ठ्ये षडहे गृह्णीयात् । पूर्वे त्र्यहे–आग्नेयमेव प्रथमेऽहन्, ऐन्द्रं द्वितीये, सौर्य्यं तृतीये । एवमेवान्वहम् ॥ तानु हैके उत्तरे त्र्यहे गृह्णन्ति । तदु तथा न कुर्य्यात् । पूर्वे एवैना त्र्यहे गृह्णीयात् । यद्युत्तरे त्र्यहे गृहीष्यन् स्यात् पूर्वे एवैनां त्र्यहे गृहीत्वा अथोत्तरे त्र्यहे गृह्णीयात् ॥ एवमेव यथा पूर्वं विश्वजिति सर्वपृष्ठे एकाह एव गृह्यन्ते ॥

---

(१) पात्रावकाशाः ।

स आश्विनं ग्रहं गृहीत्वाऽवकाशानवकाशयति । स उपांशुमेव प्रथममवकाशयति[१], अथोपांशुसवनम्[२], अथान्तर्यामम्[३], अथैन्द्रवायवम्[४], अथ मैत्रावरुणम्[५], अथाश्विनम्[६], अथ शुक्रामन्थिनौ[७], अथाग्रयणम्[८], अथोक्थ्यम्[९], अथ ध्रुवम्[१०], अथाम्भृणौ वैश्वदेवौ[११], अथ द्रोणकलशम्[१२] ॥ स आश्विनं ग्रहं गृहीत्वा अन्वङ्गमाशिषमाशास्ते— "सुप्रजाः प्रजाभिः स्यां, सुवीरोवारैः सुपोषः पोषैः" इति॥ तान् वै न सर्वामिवावकाशयेत् । योन्वेव ज्ञातस्तमवकाशयेत् । योवाऽस्यप्रियः स्याद् योवाऽनूचानः—अनूक्तेनैनान् प्राप्नुयात् । स आश्विनं ग्रहं गृहीत्वा कृत्स्नं यज्ञं जनयति, तमात्मन् धत्ते, तमात्मन् कुरुते ॥

---

४—प्रायश्चित्तम् ।

तावा एताश्चतुस्त्रिंशद् व्याहृतयो भवन्ति प्रायश्चित्तयो नाम—अष्टौवसवः, एकादशरुद्राः, द्वादशादित्याः, इमे एव द्यावापृथिवी त्रयस्त्रिंश्यौ, प्रजापतिश्चतुस्त्रिंशः ॥ ता हैके यज्ञ तन्व इत्याचक्षते यज्ञस्य ह त्वेवैतानि पर्वाणि । स एष यज्ञस्तायमान

एता एव देवता भवन्तेति ॥ सा यदि घर्मदुघाह्वलेत्, अन्यामुपसंक्रामेयुः । स यस्यामेवैनं वेलायां पुरा पिन्वयन्ति तद्वैवैनामुदीचीं स्थापयेद्– अग्रेण वा शालां प्राचीम् । तद् ये एते अभितः पुच्छकाण्ड शिखण्डास्थे उच्छ्रयाते, तयोर्यद्दक्षिणं तस्मिन्नेताश्चतुस्त्रिंशतमाज्याहुतीर्जुहोति । यद् यज्ञस्यह्वलेत् तत् समन्वीक्ष्य जुहुयात् दाक्षोपसत्स्वाहवनीये प्रसुत आग्नीध्रे । अथ यदिस्कन्देत् तदद्भिरुपनिनयेत्—वैष्णव वारुण्यर्चा । अथो अभ्येव मृशेत् ॥

---

## ५—अहीनं गर्गत्रिरात्रम् ।

तद् यत्रैतत् त्रिरात्रे सहस्रं ददाति तदेषा साहस्री क्रियते । स प्रथमेऽहं स्त्रीणि च शतानि नयति त्रयस्त्रिंशतं च । एवमेव द्वितीयेऽहन् । एवमेव तृतीयेऽहन् । अथैषा साहस्रयतिरिच्यते । सा वै त्रिरूपा स्यादित्याहुः । रोहिणीहत्वेवोपध्वस्ता स्यात् । सा स्यादप्रवीता । तां प्रथमेऽहन्नयेत् । उत्तमे वैनामहन्नयेत् । सो एषामीमांसैव । उत्तम एवैनामहन्नयेत् ॥ तामुत्तरेण हविर्धाने दक्षिणेनाग्नीध्रं द्रोणकलशमवघ्रापयति । अथ दक्षिणे कर्णे आजपति –

"इडेरन्तेहव्येकाम्ये चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रुति ।
एता ते अघ्न्ये नामानि, देवेभ्यो मा सुकृतं ब्रूतात्"—इति ॥

तामवार्जन्ति । सा यद्यु पुरुषाऽभिवीता प्राचीयात्, तत्र विद्याद्—"अरात्सीदयं यजमानः कल्याणं लोकमजैषीदिति" । यद्युदीचीयात्—"श्रेयानस्मिन्लोके यजमानोभविष्यतीति विद्यात् ॥ यदि प्रतीचीयात्—इभ्यतिल्विल इव धान्यतिल्विलो भविष्यतीति विद्यात् ॥ यदि दक्षिणेयात्—क्षिप्रेऽस्माल्लोकाद् यजमानः प्रैष्यतीति विद्यात् । एतानि विज्ञानानि ॥ तां होत्रे दद्यात् ॥ द्वौ वोन्नेतारौ कुर्वीत । तयोर्यतरो नाश्रावयेत् तस्मा एनां दद्यात् । तदाहुः – न सहस्रेऽधिकिञ्चन दद्यात—इति । तदु हैत्राचासुरिः—काममेव दद्यात् ॥ अथ यदि रथं वा युक्तं वा दास्यन् स्यात्, यद्वावशायैवा वपायां हुतायां दद्याद्—उदवसानीयायां वेष्टौ ॥ स वै दक्षिणानयनन्नन्यूना दशतो नयेत् यस्मा एकां दास्यन् स्याद्दशभ्यस्तेभ्यो दशतमुपावर्तयेत् । यस्मै द्वे दास्यन् स्यात पञ्चभ्यस्तेभ्यो दशतमुपावर्तयेत् ॥ यस्मै तिस्रो दास्यन् स्यात् त्रिभ्यस्तेभ्यो दशतमुपावर्तयेत् ॥ यस्मै पञ्चदास्यन् स्याद्—द्वाभ्यां ताभ्यां दशतमुपावर्तयेत् ॥ एवमाशतात् ॥

---

## ६—अथ व्यूढ-द्वादशाहः ।

यदे तद् द्वादशाहेन व्यूढच्छन्दसा यजते तद् ग्रहान् व्यूहति, व्यूहत उद्गाता च होता च छन्दांसि ॥ स एष प्रज्ञात एव पूर्वस्त्र्यहो भवति समूढच्छन्दाः ॥ तद्रैन्द्र वायवाग्रान् गृह्णाति ॥ १ ॥ अथ चतुर्थेऽहन व्यूहति ग्रहान्, व्यूहन्ति छन्दांसि ॥ तदाग्रयणाग्रान गृह्णाति । तं गृहीत्वा न सादयति । तं धारयन्त एवोपासतेऽथ ग्रहान् गृह्णाति यत्रै वै तस्य कालः तदेवैनं हिंकृत्य सादयति ॥ २ ॥ अथैनत् प्रज्ञातमेव पञ्चममहर्भवति । तदैन्द्रवायवाग्रान् गृह्णाति ॥ ३ ॥ अथ षष्ठेऽहन् व्यूहति ग्रहान्, व्यूहन्ति छन्दांसि ॥ तच्छुक्राग्रान गृह्णाति ॥ तं गृहीत्वा न सादयति । तं धारयन्त एवोपासतेऽथ ग्रहान् गृह्णाति । यत्रैवैतस्य कालस्तदेनं सादयति ॥४॥ अथ सप्तमेऽहन् व्यूहति ग्रहान्, व्यूहन्ति छन्दांसि ॥ तच्छुक्राग्रान् गृह्णाति । तं गृहीत्वा न सादयति । तं धारयन्त एवोपासतेऽथ ग्रहान गृह्णाति । यत्रैवैतस्य कालस्तदेनं सादयात ॥ ५ ॥ अथैतत् प्रज्ञातमेवाष्टममहर्भवति । तदैन्द्र वायवाग्रान् गृह्णाति ॥ ६ ॥ अथ नवमेऽहन् व्यूहति ग्रहान् व्यूहन्ति छन्दांसि । तदाग्रयणाग्रान् गृह्णाति । तं गृहीत्वा न सादयति । तं धारयन्त एवोपासते । अथ ग्रहान् गृह्णाति । यत्रैवैतस्य कालः तदेनं हिंकृत्य सादयति ॥ ७ ॥ तदाहुः—न व्यूहेद् ग्रहान् इति । तदु व्यूहेदेव । तदु नैव व्यूहेत् ॥ किंतु तत्राध्वर्योः, यदुद्गाता च होता च छन्दांसि व्यूहतः । एतद्वा अध्वर्युर्व्यूहति ग्रहान— यदैन्द्रवायवाग्रान् प्रातः सवने गृह्णाति, शुक्राग्रान्माध्यन्दिने, आग्रयणाग्रांस्तृतीयसवने ॥

---

## १—प्रायश्चित्तयः ।

यदि सोममपहरेयुः विधावतेच्छतिब्रूयात् ॥ स यदिविन्दन्ति. कि द्रियेरन् । यद्यु न विन्दन्ति तत्र प्रायश्चित्तिः क्रियते ॥ द्वयानिवैफाल्गुनानि—लोहितपुष्पाणि चारुण पुष्पाणि च । स या न्यरुणपुष्पाणि तान्यभिषुणुयात् ॥ यद्यरुणपुष्पाणि न विन्देयुः—श्येनहृतमभिषुणुयात् ॥ यदिश्येनहृतं न विन्देयुः—आदारानभिषुणुयात् । यद्यादारान्नविन्देयुः—अरुण दूर्वा अभिषुणुयात् ॥ यद्यरुणदुर्वा न विन्देयुः—अपि यानेव कांश्चहरितान् कुशानभिषुणुयात् ॥ तत्राप्येकामेव गां दद्यात् । अथावभृथादेवो देत्य पुनर्दीक्षेत । पुनर्यज्ञोह्येवतत्र प्रायश्चित्तिः-इति नु सोमापहृतानाम् ॥ १ ॥ अथ कलशादिराम ॥ यदिकलशो दीर्य्येत-अनुलिप्सध्वमिति ब्रूयात । स यद्यनुलभेरन् प्रसृत मात्रं वाऽञ्जलिमात्रं वा, तदन्यैरेकधनैरभ्युन्नीय यथा प्रभावं प्रचरेयुः ॥ यद्यु नानुलभेरन्-आग्रयणस्यैव प्रस्कन्द्यान्यैरेकधनैरभ्युन्नीय यथा प्रभावं प्रचरेयुः ॥

स यद्यनीतासु दक्षिणासु कलशो दीर्य्येत, तत्राप्येकामेव गां दद्यात्। अथावभृथादेवो देत्य नर्दीक्षेत। पुनर्यज्ञोह्येव तत्र प्रायश्चित्तिः इति नुकलशादिराम ॥ २ ॥ अथ सोमातिरिक्तानाम्। यद्यग्निष्टोम मतिरिच्येत–पूतभृत एवोक्थ्यं गृह्णीयात्। यद्युक्थ्य मतिरिच्येत्–षोडशिनमुपेयुः। यदि षोडशिनमतिरिच्येत–रात्रिमुपेयुः। यदि रात्रिमति रिच्येत–अहरुपेयुः। नेत् त्वेवातीरेकोऽस्ति ॥

---

१—अंशुग्रहः ॥ २—अदाभ्यग्रहः ॥

अंशुं गृह्णाति। तं वा औदुम्बरेण पात्रेणगृह्णाति। तं वै चतुः स्रक्तिना पात्रेण गृह्णाति। स वै तूष्णीमेव ग्रावाणमादत्ते। तूष्णीमंशून्निवपति। तूष्णीमप उपसृजति। तूष्णीमुद्यत्य सकृदभिषुणोति ॥ तूष्णीमेनमनवानञ्जुहोति ॥ तदु होवाच राम औपतस्विनिः—काममेव प्राण्यात्, काममुदन्यात्–इति ॥ तदु होवाच बुडिल आश्वत राश्विः-उद्यत्यैव गृह्णीयान्नाभिषुणुयादिति ॥ तदुहोवाच याज्ञवल्क्यः–अभ्येवषुणुयात्–इति ॥ अथास्यां हिरण्यं बद्धं भवति। तदुपजिघ्रति ॥ तस्य द्वादश प्रथम गर्भाः पष्ठौह्यो दक्षिणा। तासां द्वादश गर्भाः। ताश्चतुर्विंशतिः। तदुह कौकूस्तः–चतुर्विंशतिमेवैताः प्रथम गर्भाः– पष्ठौहीर्दक्षिणाददौ, ऋषभं पञ्चविंशम् ॥ हिरण्य मे तदुह स ददौ। स वा एष न सर्वस्येव ग्रहीतव्यः यो न्वेव ज्ञातस्तस्य ग्रहीतव्यः, यो वाऽस्य प्रियः स्याद् यो वाऽनूचानः, अनूक्तेनैनं प्राप्नुयात् ॥ सहस्रे ग्रहीतव्यः ॥ सर्ववेदसे ग्रहीतव्यः। विश्वजिति सर्वपृष्ठे ग्रहीतव्यः वाजपेये राजसूये ग्रहीतव्यः ॥ सत्रे ग्रहीतव्यः। एतानि ग्रहणानि ॥

---

३—विषुवद्ग्रहः।

येवै संवत्सरमासते त एते एतं गच्छन्ति षड्भिर्मासैर्य एष तपति ॥ तदुच्यत एव सामत उच्यते ऋक्तः। अथै तदेव यजुष्टः पुरश्चरणतो यदेतं गृह्णन्ति एतेनो एवैनं गच्छन्ति अथातो गृह्णाति ॥

---

७—पश्वयनम्।

२ अथातः पश्वयनस्यैव [३]। पश्वेकादशिन्यैवेयात्। स [१] आग्नेयं प्रथमं पशुमालभते। अथ वारुणम्। अथ पुनराग्नेयम्। एवमेवैतया पश्वेकादशिन्येयात् ॥ अथो अप्यैन्द्राग्नमेवाहरहः पशुमालभते ॥ १ ॥

---

## ८—स्तोमायनम् ।

अथातः स्तोमायनस्यैव । आग्नेयमग्निष्टोम आलभते । यद्युक्थ्यःस्याद्-ऐन्द्राग्नं द्वितीयमालभते ॥ यदि षोडशी स्याद्-ऐन्द्रं तृतीयमालभेत ॥ यद्यतिरात्रः स्यात् सारस्वतं चतुर्थमालभते । तद् यथा यथं यज्ञक्रतून् व्यावर्तयति ॥ एतानि त्रीण्ययनानि । तेषां यजमन् कामयेत् तेनेयात् । द्वा उपालम्भ्यौ पशू । सौर्य्यं द्वितीयं पशुमालभते वैषुवतेऽहन्, प्राजापत्यं महाव्रते ॥

---

### (१) महाव्रत ग्रहः ।

अथातो महाव्रतीयं ग्रहं गृह्णाति । तं वा इन्द्रायैव विमृधे गृह्णीयात् ॥ अथो विश्वकर्म्मणे । यद्यु ऐन्द्रीं वैश्वकर्मणीं विद्यात् तथैव गृह्णीयात् ॥

---

## ९ – सोमापचार प्रायश्चित्तयः ।

सोमो वै राजायज्ञः । तस्यैतास्तन्वो या एतादेवताः, या एता आहुतीर्जुहोति । स यद्यज्ञस्यार्छेत्—यां तत्प्रतिदेवतां मन्येत तामनुसमीक्ष्य जुहुयात्, यदि दीक्षोपसत्सु—आहवनीये, यदि प्रसुते आग्नीध्रे ॥ स यद्येनं मनसाभिध्यातो यज्ञेनोपनमेत्—परमेष्ठिने जुहुयात् ॥ १ ॥ यद्येनं वाचाभिव्याहृतो यज्ञोनोपनमेत् – प्राजापतये जुहुयात् ॥ २ ॥ यस्य राजान मच्छेत्वा नाहरन्त एयुः—अन्धसे जुहुयात् ॥ ३ ॥ यदि सातः किञ्चिदापद्येत—सवित्रे जुहुयात् ॥ ४ ॥ यदि दीक्षासु किञ्चिदापद्येत—विश्वकर्मणे जुहुयात् ॥५॥ यदि सोमक्रयण्यां किञ्चिदापद्येत-पूष्णेजुहुयात् ॥६॥ यदिक्रयायोपोत्थितः किञ्चिदापद्येत-इन्द्राय च मरुद्भ्यश्च जुहुयात् ॥७॥ यदिपण्यमानः किञ्चिदापद्येत-असुराय जुहुयात् ॥८॥ यदिक्रीतः किञ्चिदापद्येत-मित्राय जुहुयात् ॥९॥ यद्युरावासन्नः किञ्चिदापद्येत-विष्णवेशिपिविष्टाय जुहुयात् ॥१०॥ यदिपर्य्युह्यमाणः किञ्चिदापद्येत विष्णवे नरंधिषाय जुहुयात् ॥११॥ यद्यागतः किञ्चिदापद्येत-सोमाय जुहुयात ॥१२॥ यद्यासन्द्यामासन्नः किञ्चिदापद्येत-वरुणाय जुहुयात् ॥१३॥ यद्याग्नीध्रगतः किञ्चिदापद्येत-अग्नयेजुहुयात् ॥१४॥ यदिहविर्धानगतः किञ्चिदापद्येत-इन्द्राय जुहुयात् ॥१५॥ यद्युपावह्रियमाण किञ्चिदापद्येत-अथर्वणे जुहुयात् ॥१६॥ यद्यंशुषुन्युप्तः किञ्चिदापद्येत-विश्वेभ्यो देवेभ्यो जुहुयात् ॥१७॥ यद्याप्याय्यमानःकिञ्चिदापद्येत

विष्णवे आप्रीतपाय जुहुयात् ॥१८॥ यदिभिषूयमाणः किञ्चिदापद्येत–यमाय जुहुयात् ॥१९॥ यदि संभ्रियमाणः किञ्चिदापद्येत–विष्णवेजुहुयात ॥२०॥ यदिपूयमानः किञ्चिदापद्येत–वायवे जुहुयात् ॥२१॥ यदि पूतः किञ्चिदापद्येत– शुक्राय जुहुयात् ॥२२॥ यदिक्षीरश्रीः किञ्चिदापद्येत-शुक्राय जुहुयात् ॥२३॥ यदिसक्तु श्रीः किञ्चिदापद्येत–मन्थिने जुहुयात् ॥२४॥ यदि चमसेषून्नीतः किञ्चिदापद्येत–विश्वेभ्यो देवेभ्यो जुहुयात् ॥२५॥ यदि होमायोद्यतः किञ्चिदापद्येत–असवे जुहुयात् ॥२६॥ यदि हूयमानः किञ्चिदापद्येत- रुद्राय जुहुयात ॥२७॥ यद्यभ्यावृतः किञ्चिदापद्येत–वाताय जुहुयात् ॥२८॥ यदि प्रतिख्यातः किञ्चिदापद्येत–नृचक्षसे जुहुयात् ॥२९॥ यदि भक्ष्यमाणः किञ्चिदापद्येत–भक्षाय जुहुयात् ॥३०॥ यदि नाराशंसेषुसन्नः किञ्चिदापद्येत–पितृभ्यो नाराशंसेभ्यो जुहुयात् ॥३१॥ यद्यवभृथायोद्यतः किञ्चिदापद्येत–सिन्धवे जुहुयात् ॥३२॥ यद्यभ्यवह्रियमाणः किञ्चिदापद्येत–समुद्राय जुहुयात् ॥३३॥ अथयदि प्रप्लुतः किञ्चिदापद्येत–सलिलाय जुहुयात् ॥३४॥ ता वा एता श्चतुस्त्रिंशत माज्याहुतोर्जुहोति ताब्रह्मैव जुहुयात् नाब्रह्मा ॥ यदि तु ब्रह्मानविद्यात् अपि य एव कश्चविद्यात् स जुहुयाद्–ब्रह्माणं त्वामन्त्र्य ब्रह्मणातिसृष्टः । ताहस्मैताः पुरा व्याहृतीर्वसिष्ठा एव विदुः, तस्माद्धस्म पुरा वासिष्ठ एव ब्रह्मा भवति । यतस्त्वेना, अप्येतर्हि य एव कश्चाधीते ततोऽप्येतर्हि य एव कश्च ब्रह्मा भवति ॥

इति सोमापचार प्रायश्चित्तयः ॥

## ॥ इति महायज्ञो द्वितीयं प्रकरणं समाप्तम् ॥



# ३—अथ अतियज्ञस्तृतीयं प्रकरणम्

## १–अश्वमेधः ।

ब्रह्मौदनं पचति । यदाज्यमुच्छिष्यते तेन दर्भमयीं रशनामभ्यज्यादत्ते । महर्त्विजो ब्रह्मौदनं प्राश्नन्ति । ब्रह्मौदने सुवर्णं हिरण्यं ददाति शतमानम् ।। दिग्भ्यः समाहृताश्चतुष्ट्यो रपो वसतीवरीर्मध्यमायाह्ने गृह्णाति । अश्वभिधानी मादत्ते द्वादशारत्निं वा त्रयोदशारत्निं वा । "ब्रह्मन्नश्वं मन्त्यस्यामि देवेभ्यः प्रजापतये, तेन राध्यासम" –इति ब्रह्माणमामन्त्रयते । ब्रह्मण एवैनं प्रतिप्रोच्य बध्नाति । 'तं बधान देवेभ्यः प्रजापतये, तेन राध्नुहि'—इति ब्रह्मा प्रसौति । अथ प्रोक्षति । श्वानं चतुरक्षं हत्वाधस्पदमश्वस्योपप्लावयति । यथा वै हविषो हुतस्य स्कन्देद् एवमेतत् पशोः स्कन्दति यं निक्रमनालब्धमुत्सृजन्ति ।। स्तोकीयाजुहोत्यस्कन्दाय सहस्रम् ।। पराचीराहुतिर्जुहोति ।। अग्नये[१], सोमाय[२], अपांमोदाय[३], सवित्रे[४], वायवे[५], विष्णवे[६], इन्द्राय[७], बृहस्पते[८], मित्राय[९], वारुणाय[१०],—एतावन्तो वैसर्वेदेवा स्तेभ्य एवैनं जुहोति ।। यथा वै हविष्णोऽहुतस्यस्कन्देद् एवमेतत् पशोःस्कन्दति यं प्रोक्षित मनालब्धमुत्सृजन्ति । रूपाणि जुहोत्यस्कन्दाय हिङ्काराय, हिंकृताय । एतानि वा अश्वस्य रूपाणि ।। सावित्र्या एवेष्टेः पुरस्तादनुद्रवत्यसकृदेव रूपाण्याहवनीये जुहोति । आयतन एवाहुतिर्जुहोति यज्ञमुखे संतत्यै ।। अष्टाचत्वारिंशदं जुहोत्येकमतिरिक्तं जुहोत ।। सायं धृतीर्जुहोति प्रातरिष्टिभिर्यजते । सावित्र्य इष्टयो भवन्ति ।।

ब्राह्मणराजन्यौ वीणागाथिनौ संवत्सरं गायतः । तद्दिवा ब्राह्मणो गायति नक्तं राजन्यः । 'अयजत'–इति, 'अददाद्' इति ब्राह्मणो गायति । 'अयुध्यत'–इति, 'अमुं संग्राममजयद्'–इति राजन्यः । तिस्रोऽन्यो गाथागायति तिस्रोऽन्यः ।। ताभ्यां शतं ददाति ।। संवत्सरमाहुतीर्जुहोति षोडशनवतीः ।। राष्ट्र्यश्वमेधेन यजेत । परा वा एषसिच्यते योऽबलोऽश्वमेधेन यजते । शतं कवचिनो रक्षन्ति यज्ञस्य सन्तत्या अव्यवच्छेदाय । यद्यमित्रा अश्वं विन्देरन् यज्ञोऽस्य विच्छिद्येत । अथान्यमानीय प्रोक्षेयुः । सैव तत्र प्रायश्चितिः ।। सप्तवैश्वदेवान्यन्वहं जुहोति सा दीक्षा । सप्ताहं प्रचरन्ति । त्रेधा विभज्य देवतां जुहोति । एकविंशतिः सम्पद्यन्ते ।। त्रिंशतमौद्ग्रभणानि जुहोति । चत्वार्यौद्ग्रभणानि जुहोति । त्रीणि वैश्वदेवानि । सप्तसंपद्यन्ते पूर्णाहुति

मुत्तमां जुहोति ॥ अन्नहोमान् जुहोति—आज्येन सक्तुभिर्धानाभिर्लाजैः ॥ प्राणाय स्वाहाऽपानाय स्वाहेति नाम ग्राहं जुहोति । एकस्मै द्वाभ्यां शतायैकशतायेत्यनुपूर्वमेकोत्तराः पराचीराहुतीर्जुहोति । एकशतं जुहोति नैकशतमत्येति । व्युष्ट्यै स्वाहा, स्वर्गाय स्वाहेत्युत्तमे आहुती जुहोति । व्युष्ट्यै स्वाहेत्युनुदिते आदित्ये जुहोति, स्वर्गाय स्वाहेत्युदिते ॥ अश्वेपशून्नियुनक्ति । तान्मध्यमे यूपे आलभते । अश्वं, तूपर गोमृगं, कृष्णग्रीव माग्नेयं, सारस्वतीं मेषीम्, आश्विनावधोरामौ, सौमापौष्णं श्यामम्, सौर्य्ययामौ श्वेतं च कृष्णं च, त्वाष्ट्रौ लोमश सक्थौ, वायव्यं श्वेतम्, वैष्णवो वामनः—ते वा एते पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति । पञ्चदश पञ्चदशो एवेतरेषु ॥ सप्तदशैव पशुन्मध्यमे यूपे आलभेत, षोडश षोडशेतरेषु । तान् हैके बार्हदुक्थीभिराप्रीणीयादित्याहुः । न तथा कुर्य्यात् । जामदग्नीभिरेवाप्रीणीयात ॥ तद्धैके एतेषां पर्य्यङ्ग्याणां नाना याज्या पुरोऽनुवाक्याः कुर्वन्ति । न तथा कुर्य्यात् । प्राजापत्य एवाश्वो देवदेवत्या इत्तरे ॥ हिरण्मयोऽश्वस्य शासो भवति, लोहमयाः पर्य्यङ्ग्याणाम्, आयसा इतरेषाम् ॥ वैतस इटसून उत्तरतोऽश्वस्यावद्यन्ति । अश्वेन पवमानाय सर्पन्ति । पुच्छमन्वारभन्ते । अथोद्गातारमवरुध्याश्वमुद्गीथायवृणीते । हिंकरोति । संशिञ्जते । हिरण्यं दक्षिणा सुवर्णं शतमानम् ॥ एकादशिनान् पशूना लभेत, दशिन आलभते । शतमालभते । एकादश दशत आलभते । वैश्वदेवा बहुरूपा नानारूपा भवन्ति ॥ महिष्यभ्यनक्ति, वावाता, परिवृक्ता । पत्न्योऽभ्यञ्जन्त ॥ यथा वै हविषोऽहुतस्यस्कन्देत् एवमेतत् पशोः स्कन्दति । यस्य निक्तस्य लोमानि शीयन्ते तदेकशतमेकशतं हिरण्मयान् काचानावयन्ति । अतिरिक्तमन्नमश्वायोपावहरति । यूपमभितो होता च ब्रह्मोद्यं वदतः—

| | |
|---|---|
| १ होता अध्वर्य्युं पृच्छति— | तं प्रत्याहाध्वर्य्युः— |
| कःस्विदेकाकी चरति | सूर्य्य एकाकी चरति |
| कउस्विज्जायते पुनः | चन्द्रमा जायते पुनः |
| किंस्विद्धिमस्य भेषजं | अग्निर्हिमस्य भेषजं |
| किम्वावपनं महत् | भूमिरावपनं महत् |

| | | |
|---|---|---|
| २ | अध्वर्य्युर्होतारं पृच्छति—<br>कि ँ स्वित्सूर्य्यसमं ज्योतिः<br>कि ँ समुद्रसम सरः<br>कि ँ स्वित्पृथिव्यै वर्षीयः<br>कस्यमात्रा न विद्यते | तंप्रत्याह होता—<br>ब्रह्म सूर्य्यसमं ज्योतिः<br>द्यौः समुद्रसमं सरः<br>इन्द्रः पृथिव्यै वर्षीयान्<br>गोस्तु मात्रा न विद्यते ॥ |
| ३ | ब्रह्मा उद्गातारं पृच्छति—<br>पृच्छामित्वा चितये देवसख<br>यदित्वामत्र मनसा जगन्थ<br>येषुविष्णुस्त्रिषु पदेष्वेष्ट<br>स्तेषु विश्वं भुवनमाविवेशाँ | तं प्रत्याह उद्गाता—<br>अपि तेषु त्रिषु पदेष्वस्मि<br>येषु विश्वं भुवनमाविवेश ॥<br>सद्यः पर्य्येमि पृथिवी मुतद्या<br>मेकेनाङ्गेन दिवो अस्यपृष्ठम् |
| ४ | उद्गाता ब्रह्माणं पृच्छति—<br>केष्वन्तः पुरुष आ विवेश<br>कान्यन्तः पुरुषे अर्पितानि<br>एतद्ब्रह्मन्नुपवह्लामसि त्वा<br>कि ँ स्विन्नः प्रतिवोचास्यत्र | तं प्रत्याह ब्रह्मा—<br>पञ्चस्वन्तः पुरुष आविवेश<br>तान्यन्तः पुरुषे अर्पितानि<br>एत्त्वात्र प्रतिमन्वानो अस्मि<br>न मायया भुवस्युत्तरो मत् |
| ५ | होता अध्वर्य्युं पृच्छति—<br>का स्विदासीत्पूर्वचितिः<br>कि ँ स्विदासीद्बृहद्वयः<br>कास्विदासीत्पिलिप्पिला<br>कास्विदासीत्पिशङ्गिला | तं प्रत्याह अध्वर्य्युः—<br>द्यौरासीत्पूर्वचित्ति रश्व<br>अश्व आसीद्बृहद्वयः<br>अविरासी त्पिलिप्पिला<br>रात्रिरासीत्पिशङ्गिला |

| | | |
|---|---|---|
| ६ | अध्वर्युर्होतारं पृच्छति—<br>का ईमिरे पिशङ्गिला<br>का इकुरु पिशङ्गिला<br>क ईमारकन्दमर्षति<br>क ईंपन्था विसर्पति | तं प्रत्याह होता—<br>अजारे पिशङ्गिला<br>श्वावित्कुरु पिशङ्गिला<br>शश आरकन्दमर्षति<br>अहि पन्थां विसर्पति |
| ७ | ब्रह्मा उद्गातारं पृच्छति—<br>कत्यस्य विष्ठाः कत्यक्षराणि<br>कति होमासः कतिधा समिद्धः<br>यज्ञस्य त्वा विदथा पृच्छमत्र<br>कति होतार ऋतुशो यजन्ति | तं प्रत्याह उद्गाता—<br>षडस्य विष्ठाः शतमक्षराणी<br>अशीतिर्होमाः समिधो ह तिस्रः<br>यज्ञस्य ते विदथा प्रब्रवीमि<br>सप्तहोतार ऋतुशो यजन्ति |
| ८ | उद्गाता ब्रह्माणं पृच्छति—<br>को अस्य वेदभुवनस्य नाभिं<br>को द्यावापृथिवी अन्तरिक्षम्<br>कः सूर्य्यस्य वेद बृहतो जनित्रं<br>को वेद चन्द्रमसं यतोजाः | तं प्रत्याह ब्रह्मा—<br>वेदाहमस्य भुवनस्य नाभिं<br>वेद द्यावापृथिवी अन्तरिक्षम्<br>वेद सूर्य्यस्य बृहतो जनित्र<br>मथोवेद चन्द्रमसं यतोजाः |
| ९ | अध्वर्युं यजमानः पृच्छति—<br>पृच्छामि त्वा परमन्त पृथिव्याः<br>पृच्छामि यत्र भुवनस्य नाभिं<br>पृच्छामि त्वा वृष्णो अश्वस्य रेतः<br>रेतः पृच्छामि वाचः परमं व्योम | तं प्रत्याह अध्वर्युः—<br>इयं वेदिः परोअन्त पृथिव्या<br>अयं यज्ञो भुवनस्य नाभिः<br>अयं सोमोवृष्णो अश्वस्यरेतो<br>ब्रह्मायं वाचः परम व्योम । |

नियुक्तेषु पशुषु प्रोक्षणीरध्वर्युरादत्तेऽश्वं प्रोक्षिष्यन्नन्वारब्धे यजमाने आध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यते। प्रजापतयेत्वाजुष्टं प्रोक्षामीत्युपांशु। अथोप गृह्णाति। अग्निः पशुरासीत्, तेना यजन्त, स एतं लोकमजयत् यस्मिन्नग्निः स ते लोको भविष्यति, तं जेष्यसि, पिबैता अपः ।१। वायुः पशुरा०।२। सूर्यः पशुरा० ।३। तर्पयित्वाऽश्वं पुनः संस्कृत्य प्रोक्षणीरितरान् पशून् प्रोक्षति। अश्वेनोदक्षोयन्ति। वासोऽधिवासं हिरण्यमित्यश्वायोपस्तृणन्ति तस्मिन्नेनमधि संज्ञपयन्ति। संज्ञप्यमान आहुतीर्जुहोति। पत्नीरुदानयति। पत्न्यः परियन्ति। अतोन्येवास्मैह्नुवते, अथो धुवत एवैनं, त्रिः परियन्ति, त्रिः पुनः परियन्ति। नव कृत्वः परियन्ति ॥ तिरश्चीभिश्चोर्ध्वाभिश्च बहुरूपाभिर्नानारूपाभिर्हिरण्मयीभिः सूचीभिरसिपथान् कल्पयन्ति। त्रयः सूच्योभ भवन्ति—लोहमय्यो रजता हरिण्यः ॥ महिमानो ग्रहौ जुहुयात् वपामभितो जुहोति राज्ञा वपां परियजति ॥ उत्तरतोऽश्वस्यावद्यन्ति दक्षिणतोऽन्येषां पशूनाम् ॥ वैतसः कटा भवति। चतुष्टोमः स्तोमोभवति सर्वस्तोमोऽतिरात्र उत्तममहर्भवति। शाक्वर्यः पृष्ठं भवति। बहुरूपा नानारूपा वैश्वदेवा गव्या उत्तमेऽहन्ना लभते। तिस्रोऽनुष्टुभश्चतस्रो गायत्र्यः। शाक्वर्यं पृष्ठं भवति। एकविंशं मध्यममहर्भवति। वामदेव्यं मैत्रावरुणसाम भवति, पार्थु समं ब्रह्मसाम, संकृत्यच्छावाकसाम। सर्वस्तोमोऽति रात्र उत्तममहर्भवति ॥ द्वादश एवाग्निस्यात्, एकादश यूपा इत्याहुः। एकविंश एवाग्निर्भवति, एकविंशःस्तोमः, एकविंशतिर्यूपाः—एतानि वा अश्वमेधे त्रीणिशीर्षाणि। एता वा अश्वमेधे तिस्रःककुदः ॥ छादं दद्भिरवकां दन्तमूलै रित्याद्य मवदाना कृत्वा प्रत्याख्याय देवताभ्य आहुतीर्जुहोति। अरण्येऽनूच्यान् हुत्वा द्यावा पृथिव्यामुत्तमामाहुतिं जुहोति। स्विष्टकृद्भ्यो लोहितं जुहोति। गोमृगकण्ठेन प्रथमामाहुतिं जुहोति। अश्वशफेन द्वितीयाम्। अयस्मयेन चरुणा तृतीयाम्, इति ॥

मृत्यवे स्वाहेत्येकस्मा एवैकामाहुतिं जुहोति, ब्रह्महत्यायै स्वाहेति द्वितीयाम्। अश्वस्तोमीय माज्येन जुहोति। अश्वस्तोमीयं हुत्वा द्विपदा जुहोति। षोडशाश्वस्तोमीया जुहोति। द्विपदा उत्तमा जुहोति। जुम्बकाय स्वाहेत्यवभृथ उत्तमा माहुतिं जुहोति। शुक्लस्य खलतेर्विक्लिधस्य पिङ्गाक्षस्य मूर्धनि जुहोति ॥ द्वादशब्रह्मौदनानुत्थाय निर्वपति द्वादशेष्टिभिर्यजते ॥

अथातः प्रायश्चित्तीनाम् ॥ यद्यश्वो वडवां स्कन्देत्—वायव्यं पयोऽनुनिर्वपेत् ॥१॥ अथ यदिस्तोमो विन्देत्—पौष्णं चरु मनुनिर्वपेत ॥ २ ॥ अथ यद्यक्षतामयोविन्देत—वैश्वानरं द्वादशकपालं भूमिकपालं पुरोडाशमनुनिर्वपेत् ॥३॥ अथ यद्यदयामयो विन्देत—सौम्यंचरुमनुनिर्वपेत ॥ ४ ॥ अथ यद्युदकेम्रियेत—वारुणं यव मयं चरुमनुनिर्वपेत ॥५॥ अथ यदिनश्येत्—त्रिहविषमिष्टिमनुनिर्वपेत्, द्यावा पृथिव्य मेककपालं पुरोडाशं वायव्यं

पयःसौर्य्यं चरुम्॥६॥अथ यद्यमित्राअश्वं विन्देरन्, यदिवा म्रियेत्, यदि वाप्स्वन्यमानीय प्रोद्वेयुः, सैव तत्र प्रायश्चित्तिः॥

अश्वमेधस्त्रिरात्रो यज्ञ क्रतुः,क्षत्रिय यज्ञ उ वा एष यदश्वमेधः तस्माद्ग्रीष्मेऽभ्यारभेतेत्य हैकआहुः। तद्वै वसन्त एवाभ्यारभेत। सा यासौ फाल्गुनी पौर्णमासी, तस्यै पुरस्तात् षडहे वा सप्ताहे वा ऋत्विज उपसमायन्ति–अध्वर्य्युश्च, होता च, ब्रह्मा च, उद्गाताच। एतान्वा अन्वन्य ऋत्विजः।

तेभ्योऽध्वर्य्युश्चातुः प्राश्यं ब्रह्मौदनंनिर्वपति। चतुरः पात्रान्, चतुरोऽञ्जलीन्, चतुरःप्रसृतान्–द्वादशविधम्। तमेतेचत्वार ऋत्विजः प्राश्नन्ति। तेभ्यश्चत्वारि सहस्राणि ददाति। चत्वारिचसुवर्णानि शतमानानि हिरण्यानि॥ अथास्मा अध्वर्य्युर्निष्कं प्रतिमुञ्चन् वाचयति–"तेजोऽसि शुक्रममृतम्। आयुष्पा आयुर्मे पाहि"॥ अथैनमाह–"वाचं यच्छ" इति॥

चतस्रो जाया उपक्लृप्ता भवन्ति–महिषी, वावाता, परिवृक्ता, पालागली। सर्वानिष्किन्योऽलंकृताः। ताभिः सहाग्न्यगारं प्रपद्यते– पूर्वयाद्वारायजमानो दक्षिणया पत्न्यः॥सायमाहुत्यां हुत यां जघनेन गार्हपत्य मुदङ्वावान्या सह संविशन्ति। सोऽन्तरोरूअसंवर्तमानःशेते। प्रातराहुत्यांहुतायामध्वर्युः पूर्णाहुतिं जुहोति। तस्यां वरे वाचं विसृजते, वरं ददामि ब्रह्मण इति अथ योऽस्यनिष्कः प्रतिमुक्तो भवति तमध्वर्य्यवे ददाति॥

अथाग्नेयीमिष्टिंनिर्वपति तस्यै पञ्चदश सामिधेन्यो भवन्ति वार्त्रघ्नावाज्यभागौ। उपांशु हविषो याज्यानुवाक्ये, मूर्द्धन्वत्यन्या, सद्वत्यन्या॥ विराजौसंयाज्ये हिरण्यं दक्षिणा सुवर्णं शतमानम्॥ १॥ अथ पौष्णीं निर्वपति। तस्यै सप्तदश सामिधेन्यो भवन्ति। वृधन्वन्तावाज्यभागौ। उपांशुहविषोयाज्यानुवाक्ये व्रतंवत्यन्या पथन्वत्यन्या अनुष्टुभौ संयाज्ये। वासः शतं दक्षिणा॥ २॥

एतस्यां तायमानायामश्वं निक्तोदानयन्ति यस्मिन् सर्वाणि रूपाणि भवन्ति। योवा जव समृद्धःसहस्रार्हःपूर्व्यो यो दक्षिणायांधुर्य्यप्रतिधुरः॥तदुहोवाच भाल्लवेयः द्विरूप एवैषोऽश्वःस्यात् कृष्णसारङ्गः। अथहोवाचसात्ययज्ञिः—त्रिरूप एवैषोऽश्वःस्यात्, तस्य कृष्णः पूर्वार्द्धः, शुक्लोऽपरार्द्धः, कृतिकाञ्जिःपुरस्तात्॥ स एव रूपसमृद्धः। अतोयतमोऽस्योपकल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत। जवेनत्वेव समृद्धःस्यात्॥ तस्यै ते पुरस्ताद्रक्षितारः उपक्लृप्ता भवन्ति–राजपुत्राःकवचिनःशतं,

राजन्या निषङ्गिणः, शतं, सूतग्रामण्यां पुत्राः इषुपर्विणः, शतं, क्षात्रसंगृहीतॄणां पुत्राः दण्डिनः शतं, मश्वशतं निरष्टं निरमणं यस्मिन्नेन मपि सृज्य रक्षन्ति ॥

अथ सावित्रीमिष्टिनिर्वपति । सवित्रे प्रसवित्रे द्वादशकपालंपुरोडाशम् । तस्यै पञ्चदशसामिधेन्यो भवन्ति वार्त्रघ्नावाज्यभागौ । उपांशुहविषोयाज्यानुवाक्ये । विराजौ संयाज्ये । हिरण्यंदक्षिणासुवर्णंशतमानम् ॥ तस्यै प्रयाजेषुतायमानेषु ब्राह्मणो वीणा गाथी दक्षिणत उत्तरमन्द्रामुदाघ्नंस्तिस्रःस्वयंसंभृता गाथागायति-इत्ययजत इत्यददादिति ॥ १ ॥ अथ द्वितीयां निवपति । सवित्र आसवित्रे द्वादशकपालं पुरोडाशम ॥ तस्यै सप्तदशसामिधेन्यो भवन्ति । मद्वन्तावाज्यभागौ । उपांशुहविषोयाज्यानुवाक्ये-अनुष्टुभौसंयाज्ये । रजतं हिरण्यंशतमानं दक्षिणा ॥ तस्यै प्रयाजेषु तापमानेषु ब्राह्मणो वीणागाथी ॥ २ ॥ अथ तृतीयांनिर्वपति । सवित्रे सत्यप्रसवाय द्वादशकपालंपुरोडाशम । तस्यै सप्तदशैव सामिधेन्यः । रयिमन्तावाज्यभागौ । उपांशु हविषो याज्यानुवाक्ये । नित्येसंयाज्येत्रिष्टुभौभवतः । हिरण्यंदक्षिणासुवर्णशतमानम ॥ तस्यै प्रयाजेषु तापमानेषु ब्राह्मणो वीणागाथी ॥३॥ एतस्यां संस्थितायामुपोत्थायाध्वर्युश्चयजमानश्चाश्वस्य दक्षिणे कर्ण आजपतो-विभूर्मात्रा प्रभुः पित्रेति ॥ अथैन मुदञ्चं प्राञ्चं प्रसृजतः । स आहः-'देवा आशापाला एतं देवेभ्योऽश्वंमेधाय प्रोक्षितं रक्षत'-इत्युक्त्वा मानुषा आशापालाः अथैतेदेवाआप्याः साध्या अन्वाध्याः मरुतः तमेत उभये देवमनुष्याः संविदाना अप्रत्यावर्त्तयन्तः संवत्सरं रक्षन्ति। स आह-"आशापालाः! येवा एतस्योदृच गमिस्यन्ति राष्ट्रं ते भविष्यन्ति, राजानोभविष्यन्त्यभिषेचनीयाः । अथ य एस्योदृचं न गमिष्यन्त्यराष्ट्रं ते भविष्यन्ति अराजानो भविष्यन्ति राजन्या विशोऽनभिषेचनीयाः । तस्मान्मा प्रमदत, स्नात्वाचैवैनमुदकान्निरुन्धीध्वं, वडवाभ्यश्च । यद्यद्ब्राह्मणजातमुपनिगच्छेत तत्तत्पृच्छेत्-'ब्राह्मणाः कियद्यूयमश्वमेधस्यवित्थेति' । ते येन विद्युजिनीयात तान् । यो ब्राह्मणः सन्नश्वमेधस्य न वेद सोऽब्राह्मणः, ज्येय एव स पानं करवाथ, खादं निवपाथ, अथ यत्किञ्चजनपदेकृतान्नं, सर्वं वस्तत्सुतं, तेषां रथकारकुलएव वो वसतिः तद्धिअश्वस्यायतनम्"-इति ॥

---

१—पारिप्लवाख्यानम् ।

प्रमुच्याश्वं, दक्षिणेन वेदिं, हिरण्मयं कशियूपस्तृणाति । तस्मिन् होतोपविशति । दक्षिणेन होतारं, हिरण्यमये कूर्चे यजमानः दक्षिणतो ब्रह्माचोद्गाता च हिरण्मय्योः कशिपुनोः । पुरस्तात् प्रत्यङ्ङध्वर्युर्हिरण्मये वा कुर्चे, हिरण्मये वा फलके ॥ समुप-

विष्टेष्वध्वर्य्युः संप्रेष्यति—'होतार्भूतान्याचक्ष्व, भूतेष्विमं यजमान मध्यूह"–इति ॥ संप्रेषितो होतापारिप्लवमाख्या न माख्यास्यन्नध्वर्य्युमामन्त्रयते अध्वर्य्यो'–इति हवै। होतरित्यध्वर्य्युः। तदाह होता। 'मनुर्वैवस्वतो राजा, तस्य मनुष्याविशः, तइमे आसते'-इति। अश्रोत्रिया गृहमेधिन उपसमेता भवन्ति तानुपदिशति ॥ "ऋचोवेदः। सोऽयम्"– इत्यृचांसूक्त व्याचक्षाण इवानुद्रवेत् ॥ वीणा गणगिन उपसमेता भवन्ति तानध्वर्य्युः सं प्रेष्यति। "वीणागणगिनः"– इत्याह। "पुराणैरिमं यजमानं राजभिः साधुकृद्भिः संगायत–" इति तं ते तथा संगायन्ति। सप्रेष्याध्वर्य्युः प्रक्रमान् जुहोति। अन्वाहार्य्य-पचने वाऽश्वस्य वा पदं परिलिख्ययतरथाऽस्य तत्र वृद्धवति पूर्वा त्वेवस्थितिः ॥ सावित्र्याएवेष्टेः पुरस्तादनुद्रुत्यसकृदेवरूपाण्या हवनीये जुहोति। अथ सायं धृतिषु हूयमानासु राजन्यो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नंस्तिस्रः स्वयं सभृतागाथा गायति–"इत्ययुध्यत, इत्यमुं संग्राममजयदिति"॥१॥ अथश्वोभूतेद्वितीयेऽहन् एवमेवैतासु सावित्रीष्विष्टिषु संस्थितास्वेषैवावृत् ॥ तदाह होता। "यमो वैवस्वतो राजा। तस्य पितरोविशः, तइम आसत"–इति, स्थविरा उपसमेता भवन्ति तानुपदिशति ॥ "यजूंषि वेदः सोऽयम्"–इति यजुषामनुवाकं व्याचक्षाण इवानुद्रवेत् ॥ एवमेवाध्वर्य्युः सं प्रेष्यति न प्रक्रमान् जुहोति ॥२॥ अथ तृतीयेऽहन् एवमेवैतास्विष्टिषु संस्थितास्वेषै-वावृत् ॥ तदाह होता। "वरुण आदित्यो राजा। तस्य गन्धर्वा विशः, त इम आसते"– इति, युवानः शोभना उपसमेता भवन्ति तानुपदिशति ॥ 'अथर्वाणोवेदः। सोऽयम्"– इत्यथर्वणामेकं पर्व व्याचक्षाण इवानुद्रवेत् ॥ एवमेवाध्वर्य्युः संप्रेष्यति न प्रक्रमान् जुहोति चतुर्थादिष्वप्यहः स्वेवं न प्रक्रमान जुहोति ॥ ३ ॥ अथ चतुर्थेऽहन्नेषैवावृत्। तदाह होता। 'सोमा वैष्णवो राजा। तस्याप्सरसो विशः, ताइमा आसत–" इति, युवतयः शोभना उपसमेता भवन्ति ता उपदिशति॥ "अङ्गिरसो वेदःसोऽयम"– इत्यङ्गि रसामेकं पर्वव्याचक्षाण इवानुद्रवेत् ॥४॥ अथ पञ्चमेऽहन्नेषैवावृत् ॥ तदाह होता। 'अर्बुदः काद्रवेयो राजा। तस्य सर्पाविशः, त इम आसते–" इति, सर्पाश्च सर्प विद-श्चोपसमेता भवन्ति तानुपदिशति ॥ सर्प विद्यावेदः। सोऽयम्" इति सर्पविद्याया एकं पर्व व्याचक्षाण इवानुद्रवेत् ॥५॥ अथ षष्ठेऽहन्नेषैवावृत्। ताह होता। "कुवेरोवैश्रव-णोराजा। तस्य रक्षांसि विशः, तानीमान्यासते"– इति! सेलगाः पापकृत उपसमेता भवन्ति तानुपदिशति। "देवजनविद्यावेदः! सोऽयम्"– इति देवजनविद्याया एकं पर्व व्याचक्षाण इवानुद्रवेत् ॥ ६ ॥ अथ सप्तमेऽहन्नेषैवावृत्। तदाह होता। "असितो धान्वो राजा। तस्यासुरा विशः। त इम आसत" इति कुसीदिन उपसमेता भवन्ति तानुपदिशति ॥ "माया वेदः। सोऽयम्"–इति काञ्चिन्मायां कुर्य्यात् ॥ ७ ॥ अथाष्टमे-ऽहन्नेषैवावृत् तदाह होता। "मात्स्यः सांमदो राजा। तस्योदकेचराविशः, त इम

आसते"–इति। मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशति॥ "इति हासोवेदः। सोऽयम्"–इति कश्चिदितिहासमाचक्षीत ॥ ८ ॥ अथ नवमेऽहन्नेषैवावृत् । तदाह होता। "तार्क्ष्योवैपश्यतो राजा। तस्य वयांसि विशः तानीमान्यासते"–इति वयांसि च वायोविद्यिकाश्चोपसमेता भवन्ति। तानुपदिशति ॥ "पुराणं वेदः सोऽयम्"–किञ्चित पुराणमाचक्षीत ॥ ९ ॥ अथ दशमेऽहन्नेषैवावृत् ॥ तदाह होता। "धर्मइन्द्रो राजा। तस्यदेवाविशः। त इमआसते"–इति श्रोत्रिया अप्रतिग्राहका उपसमेता भवन्ति। तानुपादिशति ॥ "सामानि वेदः। सोऽयम्"–इति साम्नां दशतं ब्रूयात् ॥ १० ॥ एतत् पारिप्लवं सर्वाणि राजान्याचष्टे, सर्वा विशः, सर्वान् वेदान्, सर्वान् देवान् सर्वाणि भूतानि ॥ एतदेव समानमाख्यानं पुनः पुनः संवत्सरं परिप्लवते। षट्त्रिंशतं दशाहानाचष्टे ॥

---

## २ – दीक्षा।

संवत्सरे पर्य्यवेते दीक्षा। प्राजापत्यमालभ्योत्सोदन्नीष्टयः। पुरोहितस्याग्निषु यजेतेत्युहैकआहुः। किमुदीक्षितो यजेत। द्वादशदीक्षाः, द्वादशोपसदः, तिस्रः सुत्याः तत् त्रिणवमभिसम्पद्यते। दीक्षणीयायां संस्थितायां, सायं वाचिविसृष्टायां वीणागणगिन उपसमेता भवन्ति तानध्वर्य्युः संप्रेष्यति। 'वीणागणगिनो देवैरिमं यजमानं संगायत'–इति। तं ते तथा संगायन्ति। अहरहर्वाचि विसृष्टायामग्नीषोमीयाणान्ततः संस्थायां, परिहृतास्वेवसतीवरीष्वेनं देवैः संगायन्ति। प्रजापतिना सुत्या स्वेवमेवाहरहः परिहृता तास्वेव वसतीवरीषूदवसानीया याभन्ततः संस्थितायामेन प्रजापतिना संगायन्ति ॥

---

## ३ - यूपाः।

एकविंशतिर्यूपाः। सर्वे एकविंशत्यरत्नयः ॥ राज्जुदालोऽग्निष्ठो भवन्ति ॥ १ ॥ पैतुदारवावभितः ॥ ३ ॥ षड्वैल्वाः—त्रयइत्थात् ॥ ६ ॥ षट् खादिराः—त्रय एवेत्थात, त्रय इत्थात् ॥ १५ ॥ षट् पालाशाः त्रय एवेत्थात्, त्रय इत्थात् ॥२१॥ एतं प्रजापतिं यज्ञं कृत्स्नं संस्कृत्य तस्मिन्नेकविंशतिमग्नीषोमीयान् पशूनालभते। तेषां समानं कर्म्म। एतत् पूर्वेद्युः कर्म्म ॥ अथ प्रातर्गौतमस्य चतुरुत्तरः स्तोमो भवति। तस्य चतसृषु बहिष्पवमानम्। अष्टा स्वष्टा स्वाज्यानि। द्वाद्वशसु माध्यन्दिनः पवमानः।

षोडशसु पृष्ठानि । त्रिंशत्यामार्भवः पवमानः । चतुर्विंशत्यामग्निष्टोमसाम ॥ तस्य हैके-ऽग्निष्टोमसाम चतुःसाम कुर्वन्ति नाग्निष्टोमो नोक्थ इति वदन्तः । तद्यदि तथा कुर्य्युः—सार्द्धं स्तोत्रियं शस्त्वा सार्द्धमनुरूपं शंसेत्—रथन्तरं पृष्ठं, रथन्तरं शास्त्रं मग्निष्टोमो यज्ञः ॥ एकविंशतिः सवनीयाः पशवः सर्वे आग्नेयाः । तेषां समानं कर्मे-त्युहैकआहुः ॥ द्वे त्वे वैते एकादशिन्यावालभेत ॥ संस्थितेऽग्निष्टोमे परिहृतासुवसतौ-वरीष्वध्वर्य्युरत्रहोमान् जुहोति द्वादशभिरनुवाकैः ॥ एकविंशं मध्यममहर्भवति ॥ तस्य प्रातः सवनम् । 'अग्नितं मन्ये यो वसु'-रिति । होता पाङ्क्तमाज्यं शस्त्वा ऐकाहिक मुपसं शंसति । बार्हतं च प्रउगं माधुच्छन्दसं च । त्रिचंश उभे संशंसति ॥ क्लृप्तं प्रातः सवनम् ॥ अथातो माध्यन्दिनं सवनम् । अतिच्छन्दाः प्रतिपन्मरुत्वतीयस्य । "त्रिकद्रुकेषु महिषोयवाशिरम्"-इति । सैषैव त्रिः शस्ता त्रिचः सम्पद्यते ॥ "इदंवसो सुतमन्धः"-इत्यनुचरः । एष एव नित्य एकाहातानः ॥"इत्थाहि सोमइन्मदेऽविताासिसु-चेतोवृक्तवर्हिषः"-इति षड्क्तीश्च षटपदाश्च शस्त्वा एकाहिके निविदं दधाति ॥ इति मरुत्वतीयम् ॥ अथातो निष्केवल्यम् ॥ महानाम्न्यः पृष्ठं भवन्ति सानुरूपाः सप्रगाथाः शंसति । "इन्द्रोमदाय वावृधे प्रेदं ब्रह्म वृत्रतूर्य्येष्वाविथ"-इति ॥ पङ्क्तिश्च षट्-पदाश्च शस्त्वा ऐकाहिके निविदं दधाति ॥ क्लृप्तं मध्यन्दिनं सवनम ॥ अथातस्तृतीय सवनम् ॥ अतिच्छन्दा एव प्रतिपद्वैश्वदेवस्य । "अभित्यं देवं सवितार मोण्योः" इति ॥ अभि त्वा देव सवित"-रित्यनुचरः । उदुष्य देवः सवितादमूना"-इति सावित्रं शस्त्वा एकाहिके निविदं दधाति॥१॥ मही द्यावा पृथिवी इहज्येष्ठे'-इति चतुऋचं द्यावा पृथि-वीयं शस्त्वा ऐकाहिके निविदं दधाति ॥२॥ ऋभुर्विभ्वावाज इन्द्रो नो अच्छ"-इत्यार्भवं शस्त्वाऐकाहिके निविदं दधाति ॥३॥ को नुवा मित्रः वरुणावृतायन्-' इति वैश्वदेवं शस्त्वा ऐकाहिके निविदं दधाति ॥४॥ इति वैश्वदेवम् ॥ अथात् अग्नि मारुतम ॥ 'मूर्द्धानं दिवो अरतिमिति वैश्वानरीयं शस्त्वा ऐकाहिके निविदं दधाति ॥ १ ॥ आरु-द्रास इन्द्रवन्तः सजोष स'-इति मारुतं शस्त्वा ऐकाहिके निविदं दधाति ॥२॥ इदममूषु वो अतिथिमुषर्बुधमिति न वर्चं जातवेदसीयं शस्त्वा ऐकाहिके निविदं दधाति ॥३॥ तान्येतान्यैकाहिकानि निविद्धानानि भवन्ति ॥ तस्यैते पशवो भवन्ति—अश्वस्तूपरो गोमृग इति पञ्चदश पर्य्यङ्गयाः अथैते आरण्याः वसन्ताय कपिञ्जलानालभते, ग्रीष्माय कलविङ्कान् वर्षाभ्यस्तित्तिरीन् इति ॥ अथैतानेकविंशतये चातुर्मास्य देवताभ्यः । एक विंशतिं पशूनालभते न तथा कुर्य्यात् । सप्तदशैव पशून्मध्यमे यूपे आलभेत । षोडश षोडशेतरेषु । त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते ॥ अथ पुराबहिः पवमानादश्वं निक्त्वोदानयन्ति तेन पवमानाय सर्पन्ति ॥ स्तुते बहिष्पवमानेऽश्वमास्तावमाक्रमयन्ति

सयद्यत्र वा जिघ्रेद्, विवावर्तेत—समृद्धोमे यज्ञ इति ह विद्यात् । तमुपाकृत्याध्वर्य्युराह— 'होतरभिष्टुहि'-इति । तमेकादशभिर्होताभिष्टौति—यदक्रन्दः प्रथमं जायमानः-इति । त्रिः प्रथमया, त्रिरुत्तमया—ताः पञ्चदश सम्पद्यन्ते । "उप प्रागाच्छसनं वाज्यर्वोप प्रागात् परमं यत्सधस्थम्"-इति एते उद्धृत्य, "मानो मित्रोवरुणो अर्यमायुरित्येतात्सूक्तमधिगावावपति । "चतुस्त्रिंशद्वाजिनोदेवबन्धो"-रित्युहैक एता ऋङ्क्रीणां पुरस्ताद्दधाति,न तथा कुर्य्यात् । साधमेष सूक्तमावपेत्-उप प्रागाच्छसनं वाज्यर्वोप प्रागात् परमं यत् सधस्थमिति ॥ ऐते उक्त्वा यदध्रिगोः परिशिष्टं भवति तदाह । वासोऽधिवासं हिहरण्यमित्यश्वायोपस्तृणन्ति । तस्मिन्नेनमधिसंज्ञापयन्ति । संज्ञप्तेषु पशुषु पत्न्यः पान्नेजनैरुदयन्ति । चतस्रश्च जायाः कुमारी पञ्चमी चत्वारि च शतान्यनुचरीणाम् । निष्ठितेषु पान्नेजनेषु महिषीमश्वायोपनिपादयन्ति । अथैतावधिवासेन संप्रोर्णुवन्ति । निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्ते । तयोः शयानयोरश्वं यजमानोऽभिमेथति उत्सक्थ्या अवगुदंधेहीति । तं न कश्चन प्रत्यभिमेथति ॥ १ ॥ अथाध्वर्य्युः कुमारीमभिमेथाति-"कुमारि हये हये कुमारियकासकौशकुन्तिकेति । तं कुमारी प्रत्यभिमेथति-अध्वर्य्योहये हयेऽध्वर्य्यो यकोऽसकौशकुन्तक इति ॥ २ ॥ अथ ब्रह्मामहिषीमभिमेथति—महिषिहये हयेमहिषि माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः इति । तस्यै शतं राजपुत्र्योऽनुचर्य्यो भवन्ति । ता ब्रह्माणं प्रत्यभिमेथन्ति ब्रह्मन हये हयेब्रह्मन् माता च ते पिता च तेऽग्रे वृक्षस्य क्रीडत इति ॥३॥ अथोद्गाता वावातामभिमेथति-वावाते हये हये वावाते ऊर्ध्वामेनामुच्छ्रापयेति । तस्यै शतं राजन्या अनुचर्य्यो भवन्ति । ता उद्गातारं प्रत्यभिमेथन्ति—उद्गातर्हये हये उद्गातरूर्ध्वमेनमुच्छ्रयतादिति ॥ ४ ॥ अथ होता परिवृक्तामभिमेथति—परिवृक्ते हये हये परिवृक्ते यदस्या अंहुभेद्या इति । तस्यै शतं सूतग्रामण्यां दुहितरोऽनुचर्य्यो भवन्ति । ता होतारं प्रत्यभिमेथन्ति—होतर्हये हये होतर्यद्देवासोललामगुमिति ॥ ५ ॥ अथ क्षत्ता पालागलीमभिमेथति—पालागलि हये हये पालागलि । यद्धरिणो यवमत्ति न पुष्टं पशुमन्यत इति । तस्यै शतं क्षात्रसंगृहीतॄणां दुहितरोऽनुचर्य्यो भवन्ति ताः क्षत्तारं प्रत्यभिमेथन्ति—क्षत्तर्हये हयेक्षत्तर्यद्धरिणोयवमत्ति न पुष्टं बहुमन्यते इति ॥ ६ ॥ सर्वाप्तिर्वा एषा वाचो यदभिमेथिकाः ॥ उत्थापयन्ति महिषीम् । ततस्ता यथेतं प्रतिपरायन्ति । अथेतरे सुरभिमतीमृचमन्ततोऽन्वाहुः—दधिक्राव्णो अकारिषमिति ॥

याच गोमृगे वपा भवति, या चाजेतूपरे, तेऽश्वे प्रत्यवधायाहरन्ति नश्वस्य वपास्तीति वदन्तः, न तथा कुर्य्यात् ॥ अश्वस्यैव प्रत्यक्षं भेद आहरेत् प्रज्ञाता इतराः । शृतासु वपासु स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य सदसि ब्रह्मोद्यं वदन्ति पूर्वया

द्वारा प्रपद्य यथा धिष्ण्यं व्युपविशन्ति । स होताऽध्वर्य्युं पृच्छति—कः स्विदेकाकी चरतीति । तं प्रत्याह—सूर्य्य एकाकी चरतीति ॥ १ ॥ अथाध्वर्य्युर्होतारं पृच्छति—किं स्वित् सूर्य्य समं ज्योतिरिति । तं प्रत्याह—ब्रह्म सूर्य्य समं ज्योतिरिति ॥ २ ॥ अथ ब्रह्मोद्गातारं पृच्छति—पृच्छामि त्वा चितयेदेवसखेति । तं प्रत्याह—अपि तेषु त्रिषु पदेष्वस्मीति ॥ ३ ॥ अथोद्गाता ब्रह्माणं पृच्छति—केष्वन्तः पुरुष आविवेशेति । तं प्रत्याह—पञ्चस्वन्तः पुरुष आविवेशेति ॥ ४ ॥ एतस्यामुक्तायामुत्थाय सदसोऽधिप्रश्नो यजमानमभ्यायन्त्यग्रेण हविर्धाने आसीनमेत्य यथा यतनं पर्य्युपविशन्ति ॥ सहोताऽध्वर्य्युं पृच्छति—कस्विदासीत् पूर्वचितिरिति । तं प्रत्याह—द्यौरासीत् पूर्वचितिरिति ॥ १ ॥ अथाध्वर्य्युर्होतारं पृच्छति—कईमिरे पिशङ्गिलेति । तं प्रत्याह—अजारेपिशङ्गिलेति ॥ २ ॥ अथ ब्रह्मोद्गातारं पृच्छति—कत्यस्य विष्ठाः कत्यक्षराणीति । तं प्रत्याह—षडस्य विष्ठाः शतमक्षराणीति ॥ ३ ॥ अथोद्गाता ब्रह्माणं पृच्छति—कोऽस्य वेद भुवनस्य नाभिमिति । तं प्रत्याह—वेदाहमस्य भुवनस्य नाभिमिति॥ ४ ॥ अथाध्वर्य्युं यजमानः पृच्छति—पृच्छामि त्वा परमन्तं पृथिव्या इति । तं प्रत्याह—इयं वेदिः परो अन्तः पृथिव्या इति ॥ ५ ॥ सर्वाप्तिर्वा एषा वाचो यद्ब्रह्मोद्यम् ॥

उदिते ब्रह्मोद्ये प्रपद्याध्वर्य्युर्हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति । तस्य पुरोरुक्–हिरण्यगर्भः समवर्तताग्रे इति । अथास्य पुरोऽनुवाक्या–सुभूः स्वयंभूः प्रथम इति । होता यक्षत्प्रजापतिमिति प्रैषः । प्रजापतेनत्वदेतान्यन्य इति होता यजति । वषट् कृते जुहोति । यस्तेऽहन् संवत्सरे महिमा संबभूवेति । नानुवषट् करोति ॥ अथातो वपानां होमः ॥ तानैव चरे पुरावैश्वदेवस्य वपायै ॥ वैश्वदेवस्य वपायां हुतायां तदन्वितरा जुहुयुरिति ह स्माह सत्यकामो जाबालः ॥१॥ ऐन्द्राग्नस्य वपायां हुतायां तदन्वितराजुहुयुरिति ह स्माहतुः सौमापौ मानुतन्तव्यौ ॥ २ ॥ कायस्य वपायां हुतायां तदन्वितरा जुहुयुरितिहस्माह शैलालिः ॥ ३ ॥ एकविंशतिं चातुर्मास्य देवता अनुद्रुत्यैकविंशतिधा कृत्वा प्रचरेयुरिति हस्माह भाल्लवेयः ॥४॥ नानैव चरेयुरितीन्द्रोतः शौनकः ॥ एतदह तेषां वचोऽन्या त्वेवातः स्थितिः ॥ अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः सकृदेव देवत्याभिः, अञ्जसा यज्ञस्य संस्थामुपैति न ह्वलतीति॥ हुतासु वपासु प्रपद्याध्वर्य्यूरजतेन पात्रेण प्राजापत्यं महिमानमुत्तरं ग्रहं गृह्णाति॥ तस्य पुरोरुक् । "यः प्राणतो निमिषतो महित्वा–" इति । विपर्य्यस्ते याज्यानुवाक्ये अयातयामतायै । एष एव प्रैषः । वषट् कृते जुहोति । यस्ते रात्रौ संवत्सरे महिमा संबभूवेति नानुवषट् करोति ॥ नान्येषां पशूनां तेदन्या अवद्यन्ति, अवद्यन्त्यश्वस्य ॥ दक्षिणतोऽन्येषां पशूनामवद्यन्ति–उत्तरतोऽश्वस्य ॥ प्लक्षशाखा स्वन्येषां पशूनामवद्यन्ति–वेतसशाखा स्वश्वस्य ॥

तदुहोवाच सात्ययज्ञिः-इतरथैव कुर्य्युः पथ एवनापोदित्यमिति पूर्वात्वेव स्थितिः उक्थ्योयज्ञः ॥ सर्वस्तोमोऽतिरात्रः उत्तममहर्भवति ॥ तस्य त्रिवृद्बहिः पवमानम्। पञ्चदशान्याज्यानि। सप्तदशो माध्यन्दिनः पवमानः। एकविंशानिपृष्ठानि। त्रिणवस्तृतीयः पवमानः। त्रयस्त्रिंशमग्निष्टोमसाम। एकविंशान्युक्थ्यानि। एकविंशः षोडशी। पञ्चदशी रात्रिः त्रिवृत्सन्धिः। षट् द्वितीयस्याह्नः पृष्ठस्य षडहस्य तच्छस्त्रम् ॥ अति रात्रो यज्ञः। एकविंशतिः सवनीयाः पशवः। सर्व आग्नेयाः तेषां समानं कर्म्मेत्युहैक आहुः ॥ चतुर्विंशतिं त्वेवैतान् गव्यानालभेत द्वादशभ्यो देवताभ्यः ॥

एतेन हेन्द्रोतो दैवापः शौनको जनमेजयं पारिक्षितं याजयां चकार ॥१॥ एते एव पूर्वे अहनी। ज्योतिरतिरात्रः। तेन भीमसेनम् ॥२॥ एते एव पूर्वे अहनी। गौरतिरात्रः। तेनोग्रसेनम् ॥३॥ एते एव पूर्वे अहनी। आयुरति रात्रः तेन श्रुतसेनम् ।४। इत्येते पारिक्षितीयाः ॥ एते एव पूर्वे अहनी। अभिजिदतिरात्रः तेन ह पर आट्णार ईजे कौसल्यो राजा ॥ ५ ॥ एते एव पूर्वे अहनी। विश्वजिदतिरात्रः। तेन ह पुरुकुत्सोदौर्गहेणेज ऐक्ष्वाको राजा ॥ ६ ॥ एते एव पूर्वे अहनी। महाव्रतमतिरात्रः। तेन ह मरुत आविक्षित ईज आयोगवोराजा। तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वेदेवाः सभासदोबभूवुः ॥ ७ ॥ एते एव पूर्वे अहनी। आप्तोर्यामोऽतिरात्रः तेन हैतेनक्रैव्यईजे पाञ्चलो राजा। क्रिवय इति हवै पुरापञ्चालानाचक्षते ॥ ८ ॥ त्रिवृदग्निष्टोमः। पञ्चदश-उक्थ्यः। सप्तदशं तृतीयमहः सोक्थकम्। एकविंशः षोडशी। पञ्चदशा रात्रिः। त्रिवृत् सन्धिः। इत्येषोऽनुष्टुप्सम्पन्नः। तेन हैतेन ध्वसाद्वैतवन ईजे मात्स्यो राजा यत्रैतद् द्वैतवनं सरः ॥ ९ ॥ चतुर्विंशाः पवमानः त्रिवृदभ्या वर्तम् ॥ चतुश्चत्वारिंशाः पवमानाः॥ एकविंशमभ्यावर्तम्। अष्टाचत्वारिंशाः पवमानाः। त्रयस्त्रिंशमभ्यावर्तम ॥ आग्निष्टोम-सामाद्। द्वात्रिंशान्युक्थानि। एकविंशः षोडशी। पञ्चदशीरात्रिः। त्रिवृत् सन्धिरिति ॥ एतद्विष्णोः क्रान्तम् तेन हैतेन भरतो दौःषन्ति रीजे ॥ १० ॥ एकविंशस्तोमेन ऋषभो याज्ञतुर ईजेश्विक्नानांराजा ॥११॥ त्रयस्त्रिंशस्तोमेन शोणः सात्रासाह ईजे पाञ्चालो राजा ॥ १२ ॥ गोविनतेनशतानीकः सात्राजितकाश्यस्याश्वमादाय ॥ तस्य विधा-चतुर्विंशाः पवमानाः, त्रिवृदभ्यावर्तम् ॥ चतुश्चत्वारिंशा पवमानाः, एकविंशान्याज्यानि। तृणवान्युक्थानि। एक विंशान्युक्थ्यानि। एक विंशानिपृष्ठानि। षट्त्रिंशाः पवमानाः, त्रयस्त्रिंशमभ्यावर्तम्। अग्निष्टोमसामात्। एक त्रिंशान्युक्थानि। एकत्रिंशः षोडशी। पञ्चदशीरात्रिः। त्रिवृत्सन्धिः ॥ १३ ॥

अथातो दक्षिणानाम्। मध्यं प्रति राष्ट्रस्य, यदन्यद्भूमेश्च पुरुषेभ्यश्च, ब्राह्मणस्य च वितात्। प्राची दिग्घोतुः दक्षिणा ब्रह्मणः। प्रतीच्यध्वर्य्योः। उदीच्युद्गातुः। तदेव

होतृका अन्वाभक्ताः ॥ उदयनीयायां संस्थितायामेकविंशति वशा अनूबन्ध्या आलभते–मैत्रावरुणी, वैश्वदेवी. बार्हस्पत्याः ॥ उदवसानीयायां संस्थितायां चतस्रश्चजायाः, कुमारीं पञ्चमीं, चत्वारि च शतान्यनुचरीणां, यथा समुदितं दक्षिणां ददति ॥

अथोत्तरं संवत्सरमृतुपशुभिर्यजते। षड्भिराग्नेयैर्वसन्ते। षड्भिरैन्द्रैर्ग्रीष्मे। षड्भिः पार्जन्यैर्वा मारुतैर्वा वर्षासु षड्भिर्मैत्रावरुणैः शरदि। षड्भिरैन्द्रावैष्णवैर्हेमन्ते। षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे ॥ षट् त्रिंशदेते पशवो भवन्ति ॥

॥ इति अश्वमेधः ॥ १ ॥

---

## २—अथ पुरुषमेधः।

पुरुषमेधेन पञ्चरात्रेण यज्ञक्रतुना यजते। तस्य त्रयोविंशतिर्दीक्षाः। द्वादशोपसदः पञ्चसुत्याः। स एष चत्वारिंशद्रात्रः सदीक्षोपसत्कः। ता वा एताश्चतस्रो दशतो भवन्ति ॥ एकादशाग्नीषोमीयाः पशव उपवसथे तेषां समानं कर्म्म। एकादश यूपाः। एकादशिनाः सुत्यासु पशवो भवन्ति। स वा एष पुरुषमेधः पञ्चरात्रो यज्ञक्रतुर्भवति। तस्याग्निष्टोमः। प्रथममहर्भवति। अथोक्थ्यः। अथातिरात्रः। अथोक्थ्यः। अथाग्निष्टोमः। स वा एष उभयतो ज्योतिरुभयत उक्थ्यः ॥ यदेष वाग्निष्टोऽतिरात्रोऽह्नां स मध्ये, तस्मादेष यवमध्यः पञ्चरात्रो भवति। अस्मिन् मेध्यान् पुरुषानालभते। तान् वै मध्यमेऽहन्ना लभते। दशदशेत्येकादशदशतः अष्टाचत्वारिंशतं मध्यमेयूप आलभते। एकादशैकादशेतरेषु ॥ अष्टा उत्तमा नालभते। ते वै प्रजापत्यां भवन्ति। स वै पशूनुपाकरिष्यन् एतास्तिस्रः सावित्री राहुतीर्जुहोति ॥ "देवसवितः, तत्सवितुर्वरेण्यं, विश्वानि देव सवितरिति" ॥ ब्रह्मणेब्राह्मणमालभते। क्षत्राय राजन्यम्। मरुद्भ्यो वैश्यम्। तपसे शूद्रम्। आज्येन जुहोति। नियुक्तान् पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति। "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्ये तेन षोडशर्चेन। तत्पर्य्य प्रकृताः पशवो बभूवुरसंज्ञप्ताः ॥ अथहैनं वा मभ्युवाद–'पुरुषमासंतिष्ठिपो यदि संस्थापयिष्यसि पुरुष एव पुरुषमत्स्यतीति। तान् पर्याग्निकृतानेवोदसृजत्। तद्देवत्या आहुतीरजुहोत् ॥ आज्येन जुहोति। एकादशिनैः संस्थापयति। उदयनीयायां संस्थितायामेकादशवशा अनूबन्ध्या आलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्याः। अथातो दक्षिणानाम्। मध्यं प्रतिराष्ट्रस्य, यदन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्। स पुरुषम्। प्राचीदिग्घोतुः दक्षिणा ब्रह्मणः। प्रतीच्यध्वर्य्योः उदीच्युद्गातुः तदेव होतृका अन्वाभक्ताः ॥ अथ यदि ब्राह्मणो यजेत सर्वं वेदसं दद्यात् अथात्मन्नग्नी समारोह्य उत्तर नारायणे नादित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्रेयात्। तदेव मनुष्येभ्यस्तिरो भवति ॥ यद्यग्रामे

विवत्सेत्—अरण्योरग्नी समारोह्य उत्तरनारायणेनैवादित्यमुपस्थाय गृहेषु प्रत्यवस्येत्। अथ तान् यज्ञक्रतूनाहरेत यानभ्याप्नुयात्। स वा एष न सर्वस्मा अनुवक्तव्यः। योऽन्वेवज्ञातस्तस्मै ब्रूयात्। अथ योऽनूचानः, अथ योऽस्य प्रियः स्यात्। नेत् त्वेव सर्वस्मा इव॥

॥ इति पुरुषमेधः॥ २ ॥

---

## ३—सर्वमेधः।

सर्वमेधे सर्वान् मेधान् जुहोति। स वा एष सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति। तस्मिन्नग्निं पराद्ध्र्यं चिनोति। तत्राग्निष्टोमः प्रथममहर्भवति। तस्याग्नेया ग्रहा भवन्ति। आग्नेय्यः पुरोरुचः॥ १॥ इन्द्रस्तदुक्थ्यो द्वितीयमहर्भवति। तस्यैन्द्रा ग्रहा भवन्ति। ऐन्द्र्यः पुरोरुचः॥ २॥ सूर्यस्तदुक्थ्यस्तृतीयमहर्भवति। सौर्य्याग्रहा भवन्ति। सौर्य्यः पुरोरुचः॥ ३॥ वैश्वदेवश्चतुर्थमहर्भवति। वैश्वदेवाग्रहा भवन्ति। वैश्वदेव्यः पुरोरुचः॥ ४॥ आश्वमेधिकं मध्यमं पञ्चममहर्भवति। तस्मिन्नश्वं मेध्यमालभते॥ ५॥ पौरुषमेधिकं मध्यमं षष्ठमहर्भवति। तस्मिन् मेध्यान् पुरुषानालभते॥ ६॥ अप्तोर्यामः सप्तममहर्भवति। तस्मिन् सर्वान्मेध्यानालभते यच्च प्राणि, यच्च प्राणम्॥ वपा वपावतां जुहोति। व च उत्कर्तमवपाकानाम् संत्रश्च मोषधिवनस्पतीनाम्। प्रांकरन्ति शुष्काणां चान्द्राणां चान्नमन्नं जुहोति॥ सर्वं सर्वस्मै जुहोति॥ प्रातः सवने हुतासु वपासु। एवमेव तृतीयसवने हुतेषु हविःषु॥ ७॥ त्रिणव मष्टममहर्भवति॥ ८॥ त्रयस्त्रिंशं नवममहर्भवति॥ ९॥ विश्वजित् सर्वपृष्ठोऽतिरात्रो दशममहर्भवति॥ १०॥

अथातो दक्षिणानाम्॥ मध्यम् प्रति राष्ट्रस्य। यदन्यद् ब्राह्मणस्य वित्तात्। सभूमि, सपुरुषम्॥ प्राचीदिग्घोतुः। दक्षिणा ब्रह्मणः। प्रतीच्यध्वर्य्योः। उदीच्युद्गातुः। तदेव होतृका अन्वाभक्ताः॥

तेन हैतेन विश्वकर्मा भौवनं ईजे। तं ह कश्यपो यजयां चकार॥

॥ इति सर्वमेधः ॥३॥ इति मेधकर्म्माणि ॥

---

# ४—राजसूयः । वरुणसवः ॥

पूर्णाहुतिं जुहोति । तस्या वरं ददाति । स यदि कामयेत-जुहुयादेतां, यद्यु काम-येत-अपिनाद्रियेत ॥ १ ॥ अथ श्वोभूते अनुमत्यै हविरष्टाकपालं पुरोडाशं निर्वपति । स ये जघनेन शम्यां पिष्यमाणानामवशीयन्ते, पिष्टानि वा, तण्डुला वा, तान् स्रुवे सार्द्धं संवपति । अन्वाहार्य्य पचनं दुल्मुकमाददते । तेन दक्षिणायन्ति स यत्र स्वकृतं वेरिणं विन्दतिश्वभ्रप्रदरं वा, तदग्निं समाधाय जुहोति । अथा प्रतीच्चं पुनरायन्ति । अथानुमत्या अष्टाकपालेन पुरोडाशेन प्रचरति । तस्य वासो दक्षिणा । निधाय वै तद्वासोऽतिमुच्यते ॥ २ ॥ अथ श्वो भूते आग्नावैष्णवं मेकादशकपालं पुरोडाशं निर्वपति । तेन यथे-ष्ट्या-एवंयजते ॥ तस्य हिरण्यं दक्षिणा ॥ ३ ॥ अथश्वोभूते अग्नीषोमीयमेकादश-कपालंपुरोडाशं निर्वपति । तेन यथेष्ट्या-एवं यजते । तस्योत्सृष्टो गौर्दक्षिणा ॥ ४ ॥ अथ श्वोभूते ऐन्द्राग्नं द्वादशकपालं पुरोडाशं निर्वपति । तेन यथेष्ट्य -एव यजते । तस्यर्ष-भोऽनड्वान् दक्षिणा ॥ ५ ॥ अ ाग्रयणेष्ट्या यजते । तस्य गौर्दक्षिणा ॥ ६ ॥ अथ चातुर्मास्यैर्यजते । वैश्वदेवेन यजते । अथ वरुण प्रघासैर्यजते । अथ साकमेधैर्यजते । अथ शुनासीर्य्येण यजते ॥ ७ ॥ अथ पञ्चवातीयम् ॥ स पञ्चधाऽऽहवनीयं व्युह्य स्रुवे-णोपघातं जुहोति ॥ स पूर्वार्ध्ये जुहोति । अथ दक्षिणार्ध्ये जुहोति । अथ पश्चार्ध्ये जुहोति । अथोत्तरार्ध्ये जुहोति । अथ मध्येजुहोति अथसार्धं समुह्य जुहोति ॥ तस्य प्रष्टिवाहनो-ऽश्वरथो दक्षिणा । त्रयोऽश्वाः, द्वौ सव्येष्ठ सारथी, तेपञ्चप्राणाः । यदेतस्यकर्मण एषा दक्षिणा, तस्मात् पञ्चवातीयंनाम ॥ ८ ॥ अथेन्द्रतुरीयम् ॥ आग्नेयोऽष्टाकपालः पुरो-डाशो भवति ॥ वारुणो यवमयश्चरुः । रौद्रोगविधूकश्चरुः अनडुह्यै बहलाया ऐन्द्रं दधि । तेनेन्द्रतुरीयेण यजते । तस्यैषैवानडुहीबहला दक्षिणा ॥ ९ ॥ अथापामार्गहोमं जुहोति । स पालाशे वा स्रुवे वैकङ्कते वा अपामार्ग तन्दुलानादत्ते । अन्वाहार्य्यपचना दुल्मुकमाददते । तेन प्राञ्चोवोदञ्चो वायन्ति । तदग्निं समाधाय जुहोति । स उल्मुकमा-दत्ते । तदग्निं समाधाय जुहोति । स यदि प्राङित्वा जुहोति-प्राञ्च स्रुवमस्यति । यद्युद-ङित्वा जुहोति-उदञ्चं स्रुवमस्यति । अथा प्रतीच्चं पुनरायन्ति । स हैतेनापि प्रतिसरं कुर्वीत । स यस्यां ततो दिशि भवति तत् प्रतीत्य जुहोति । प्रतीचीन फलोवा अपामार्गः । स योहास्मै तत्र किञ्चित् करोति तमेव तत् प्रत्यग् धूर्वति, तस्य नामादिशेत्-"अबधि-ष्मामुमसौ हतः"—इति ॥ १० ॥

---

## १—त्रिषंयुक्त यागाः ।

आग्नावैष्णव मेकादश कपालं पुरोडाशं निर्वपति । ऐन्द्रावैष्णवं चरुम् । वैष्णवं त्रिकपालं पुरोडाश चरुं वा । तेन त्रिषं युक्तेन यजते । तस्य वामनोगौर्दक्षिणा ॥ १ ॥ अथापरेण त्रिषं युक्तेन यजते । स आग्नापौष्ण मेकादशकपाल पुरोडाशं निर्वपति । ऐन्द्रा पौष्णं चरुम् । पौष्णं चरुम् । तेन त्रिषंयुक्तेन यजते । तस्य श्यामो गौर्दक्षिणा ॥२॥ अथापरेण त्रिषंयुक्तेन यजते सो ग्नोषोमोयमेकादश कपालं पुरोडाशं निर्वपति । ऐन्द्रासौम्यं चरुम् । सौम्यं चरुम् । तेन त्रिषंयुक्तेन यजते । तस्यबभ्रुर्गौर्दक्षिणा ॥ ३ ॥ अथ श्वोभूते वैश्वानर द्वादश कपालं पुरोडाशं निर्वपति । वारुणं यवमयं चरुम् । ताभ्यामनूचीनाहंवेष्टिभ्यां यजते, समान वर्हिभ्यां वा ऋषभा वैश्वानरस्य दक्षिणा । कृष्णं वासो वारुणस्य । यदि कष्णं न विन्देद्-अपि यदेव किञ्चवासः स्यात् । ग्रन्थिभिर्हि वासो वारुणं भवति ॥ ४ ॥

---

## २—रत्नयागः ।

अरण्योरग्नी समारोह्य सेनान्यो गृहान् परेत्य—अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपति । तस्य हिरण्यं दक्षिणा ॥ १ ॥ अथ श्वोभूते पुरोहितस्य गृहान् परेत्य बार्हस्पत्यं चरुं निर्वपति । तस्य शितिपृष्ठो गौर्दक्षिणा ॥ २ ॥ अथ श्वोभूते सूयमानस्य गृह ऐन्द्रमेकादशकपालं पुरोडाशं निर्वपति । तस्यर्षभो दक्षिणा ॥ ३ ॥ अथ श्वोभूते महिष्यै गृहान् परेत्य आदित्यं चरुं निर्वपति तस्यै धेनुर्दक्षिणा ॥ ४ ॥ अथ श्वोभूते सूतस्य गृहान् परेत्य वारुणं यवमयं चरुं निर्वपति । तस्याश्वो दक्षिणा ॥ ५ ॥ अथ श्वोभूते ग्रामण्यो गृहान् परेत्य मारुतं सप्तकपालं पुरोडाशं निर्वपति । तस्य पृषन् गौर्दक्षिणा ॥ ६ ॥ अथ श्वोभूते क्षत्तुर्गृहान् परेत्य सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्वपति । तस्य श्येतोऽनड्वान् दक्षिणा ॥ ७ ॥ अथ श्वोभूते संग्रहीतुर्गृहान् परेत्याश्विनं द्विकपालं पुरोडाशं निर्वपति । तस्य यमौ गावौ दक्षिणा ॥ यदि यमौ न विन्देद्—अप्यनूचीनागर्भाविव गावौ दक्षिणा स्याताम् ॥ ८ ॥ अथ श्वोभूते भागदुघस्य गृहान परेत्य पौष्णं चरुं निर्वपति । तस्य श्यामो गौर्दक्षिणा ॥ ९ ॥ अथ श्वोभूते अक्षावापस्य गृहेभ्यो गोविकर्तस्य च गोधुकाः संभृत्य सूयमानस्य गृहे रौद्रं गवेधुकं चरुं निर्वपति । तस्य द्विरूपो गौर्दक्षिणा ॥ शितिबाहुर्वा शितिवालो वा ॥ १० ॥ अथ श्वोभूते पालागलस्य गृहान् परेत्य चतुर्गृहीतमाज्यं

गृहीत्वाऽध्वन आज्यं जुहोति । तस्य दक्षिणाऽप्युक्षा वेष्टितं धनुः, चर्ममया बाणवन्तः, लोहित उष्णीषः ॥ तानि वा एतान्येकादश रत्नानि सम्पादयति ॥ ११ ॥ अथ श्वोभूते परिवृत्त्यै गृहान् परेत्य नैर्ऋतं चरुं निर्वपति। या वा अपुत्रा पत्नी सा परिवृत्ती । स कृष्णानां व्रीहीणां नखैर्निर्भिद्य तण्डुलान् नैर्ऋतं चरुं श्रपयति । स जुहोति। तस्य दक्षिणा कृष्णा गौः परिमूर्णी पर्य्यारिणी ॥ १२ ॥

---

### ३—यशोमैत्र ।

उपरिष्टाद् रत्नानां सोमारौद्रेण यजते। स श्वेतायै श्वेतवत्सायै पयसि शृतो भवति। तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥ स ह्येतेनापि यजेत-योऽलंयशसे सन्न यशो भवति। यो वा अनूचानोऽलं यशसे सन्न यशो भवति ॥ १ ॥ अथ मैत्राबार्हस्पत्यं चरुं निर्वपति। तस्यावृत् । या स्वयं प्रशीर्णाऽऽश्वत्थीशाखा प्राचीवोदीची वा भवति तस्यै मैत्रं पात्रं करोति ॥ अथातच्य दधि विनाट आसिच्य रथं युक्त्वावध्य द्वैदीयित वा आह। तद् यत्स्वयंमुदितं नवनीतं तदाज्यं भवति ॥ द्वेधा तण्डुलान् कुर्वन्ति। स येऽणीयांसः परिभिन्नास्ते बार्हस्पत्याः। अथ ये स्थवीयांसोऽपरिभिन्नास्ते मैत्राः। अथ बार्हस्पत्य चरुमधिश्रयति। तं मैत्रेण पात्रेणापि दधाति । तदाज्यमानयति। तत् तण्डुलानावपति। स एष उष्मणैव श्रप्यते। तयोरुभयोरवद्यन्नाह—"मित्रा बृहस्पतिभ्यामनु ब्रूहि"-इति । आश्राव्याह—"मित्रा बृहस्पती यज"-इति वषट् कृते जुहोति ॥ २ ॥

---

### ४—देवसूकरणम् ।

स वै दीक्षते। स उपसथेऽग्नीषोमीयं पशुमालभते। तस्य वपया प्रचर्य्याग्नीषोमीय मेकादशकपालं पुरोडाशं निर्वपति, तदनु देवस्वां हवींषि निरूप्यन्ते ॥ सवित्रे सत्य प्रसवाय द्वादशकपालं वाऽष्टा कपालं वा पुरोडाशं निर्वपति ॥ प्लाशुकानां व्रीहीणाम्॥१॥अथाग्नये गृहपतयेऽऽष्टाकपाले निर्वपति-आशूनाम्॥२॥अथ सोमाय वनस्पतये श्यामाकं चरुं निर्वपति॥३॥अथ बृहस्पतये वाचे नैवारं चरुं निर्वपति॥४॥अथेन्द्राय जेष्ठाय हायनानां चरुं निर्वपति॥५॥अथ रुद्राय पशुपतये रौद्रं गावेधुकं चरुं निर्वपति॥६॥अथ मित्राय सत्याय नम्बानां चरुं निर्वपति॥७॥अथ वरुणाय धर्म पतये वारुणं यवमयं चरुं

निर्वपति॥८॥अथाग्नी षोमीयेन पुरोडाशेन प्रचरति। तस्या निष्ट एव स्विष्टकृद् भवति। अथै तैर्हविर्भिः प्रचरति॥ अथैनं दक्षिणे बाहावभि पद्य जपति। "सविता त्वा सवानां सुवता, मग्निर्गृहपतीनां, सोमोवनस्पतीनाम्॥ बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय, रुद्रः पशुभ्यो, मित्रः सत्यो वरुणो धर्मपतीनाम्॥१॥ इमं देवा असपत्नं सुवध्वं, महतेक्षत्राय, महते ज्यैष्ठ्याय, महते जानराज्याये, न्द्रस्ये न्द्रियाय॥ इम ममुष्य पुत्र ममुष्यै पुत्रमस्यै विशे एषवोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा॥२॥ एताहवै देवताः सवस्येशते तस्माद्देवस्वो नाम॥ तावै द्विनाम्न्यो भवन्ति॥ अथाह-'अग्नयेस्विष्टकृतेऽनुब्रूहि' इति। आश्राव्याह-'अग्नये स्विष्टकृते प्रेष्य-'इति॥ वषट् कृते जुहोति॥

---

## ५—अपां संभरणम्।

स वा अपः संभरत्यौदुम्बरे पात्रे॥ स सारस्वती रेव प्रथमागृह्णाति। अथाध्वर्युश्चतुर्गृहीतमाज्यं गृहीत्वाऽपोऽभ्यवैति। तद् या ऊर्मी व्यर्दतः पशौ वा पुरुषे वाऽभ्यवैते तौ गृह्णाति॥१॥ स यः प्राङुदर्दति तं गृह्णाति, अथ यः प्रत्यङ्ङुदर्दति तं गृह्णाति॥ २॥ अथ स्पन्दमाना गृह्णाति॥ ३॥ अथ याः स्पन्दमानानां प्रतीपं स्पन्दन्ते ता गृणाति॥ ४॥ अथा पयतीर्गृह्णाति॥ ५॥ अथ नदीपतिं गृह्णाति॥ ६॥ अथ निवेष्यं गृह्णाति॥ ७॥ अथ यः स्पन्दमानानां स्थावरोह्रदो भवति प्रत्यातापे ता गृह्णाति॥ ८॥ अथ या आतपति वर्षन्ति ता गृह्णाति॥९॥ अथ वैशन्तीर्गृह्णाति॥१०॥ अथ कूप्या गृह्णाति॥ ११॥ अथ प्रुष्वा गृह्णाति॥ १२॥ अथ मधु गृह्णाति॥ १३॥ अथ गौर्विजायमानाया उल्व्या गृह्णाति॥ १४॥ अथ पयो गृह्णाति॥ १५॥ अथ घृतं गृह्णाति॥ १६॥ अथ मरीचिराञ्जलिना सं गृह्यापि सृजति॥ १७॥ ता वा एताः सप्तदशापः संभरति। षोड़श ता आपो या अभि जुहोति। द्वयीषु न जुहोति—सारस्वतीषु च मरीचिषु च। हुत्वा हुत्वा गृह्णाति॥ ताः सार्द्धमौदुम्बरे पात्रे स मवनयति। ता अग्रेण मैत्रावरुणस्य धिष्ण्यं सादयति॥

---

६—अभिषेकः।

तं वै माध्यन्दिने सवनेऽभिषिञ्चति अगृहीते माहेन्द्रे ॥ अग्रेण मैत्रा वरुणस्य धिष्ण्यं शार्दूलचर्म्मोपस्तृणाति । अथ पार्थानि जुहोति । तानि वै द्वादश भवन्ति । षट् पुरस्तादभिषेकस्य जुहोति षडुपरिष्टात् । मध्यतः स्रुवति । अग्नये, सोमाय, सवित्रे, सरस्वत्यै, पूष्णे, बृहस्पतये-एतानि पुरस्तादभिषेकस्य जुहोति ॥ तान्येतान्यग्निनामानीत्याचक्षते । इन्द्राय, घोषाय, श्लोकाय, अंशाय, भगाय, अर्य्यम्णे- एतान्युपरिष्टादभिषेकस्य जुहोति । तान्येतान्यादित्यनामानीत्याचक्षते । अग्रेण मैत्रा वरुणस्यधिष्ण्यमभिषेचनीयानि । पात्राणि भवन्ति यत्रै ता आपोऽभिषेचनीया भवन्ति ॥ पालाशं भवति, औदुम्बरं भवति, नैयग्रोधपादं भवति, आश्वत्थं भवति,-एतान्यभिषेचनीयानि पात्राणि। अथ पवित्रे करोति । तयोर्हिरण्यं प्रवयति । ताभ्यामेता अभिषेचनीया अप उत्पुनाति । ता एतेषु पात्रेषु व्यानयति ॥ अथैनं वासांसि परिधापयति ! तत् तार्प्यमितिवांसो भवति । अथैनं पाण्डुत्वं परिधापयति । अथाधीवासं प्रतिमुञ्चति ॥ अथोष्णीषं सहृत्य पुरस्तादवगूहति । तद्धैक समन्तं परिवेष्टयन्ति । तदुतथा न कुर्य्यात् । पुरस्तादेवावगूहेत्। तद्धैके निदधत्येतानि वासांसि-अथैनं पुनर्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्यात् । स एतेषामेवैकं वाससां परिदधीय। स यत्रावभृथामभ्यवैति तदेतदभ्य वहरन्ति। स एतेषा मेवैकं वाससां परिदधीत। स यत्रावभृथा मभ्यवैति तदेतदभ्य वहरन्ति। स एतेषामेवैकं वाससां परिधायोदैति तानि वशायै वा वपायां हुतायां दद्याद्—उदवसानीयायां वेष्टौ ॥ अथ धनुरधितनोति । अथ बाहू विमार्ष्टि । अथास्मै तिस्र इषूः प्रयच्छति ॥ स यया प्रथमया समर्पयेन पराभिनत्ति सैक दृवा नाम । अथ यया विद्धः शयित्वा जीवति वा म्रियते वा, सा द्वितीया रुजानाम । अथ ययाऽपैव राध्नोति स तृतीयाक्षुमानाम ॥ अथैननाविदो वाचयति—"आविर्मर्य्या, आवित्तो अग्निर्गृहपतिः, आवित्तो इन्द्रोवृद्धश्रवाः, आवित्तौ मित्रावरुणौ धृतव्रतौ, आवित्तः पूषा विश्ववेदाः, आवित्ते द्यावापृथिवी विश्वशम्भुवौ, आवित्ताऽदितिरुरुशर्म्मा" ॥ इति ॥

केशवस्य पुरुषस्य लोहायसमास्ये आविध्यति । अथैनं दिशः समारोहयति । शार्दूलं चर्मणे जघनार्द्धे सीसं निहितं भवति, तत्पदा प्रत्यस्यति । अथैनं शार्दूलचर्मारोहयति । अथ रुक्म मधस्तादुपास्यति । अथ रुक्मः शतवितृणो वा भवति नव वितृणो वा । तमुपरिष्टाच्छीर्ष्णो निदधाति । ते नैतद्रुक्म उभयतो भवतः ॥ अथ बाहू उद्गृह्णाति । तदेनमूर्ध्वबाहुमभिषिञ्चति ॥ तं वै प्राञ्चं तिष्ठन्तमभिषिञ्चति पुरस्ताद् ब्राह्मणोभिषिञ्चति, अध्वर्य्युर्वा; यो वाऽस्य पुरोहितो भवति, पश्चादितरे ॥ अथैतम-

भिषेकं कृष्णविषाणयाऽनुविमृष्टे । अथैनमन्तरेव शार्दूलचर्म्मणि विष्णुक्रमान् क्रमयति ॥ अथ ब्राह्मणस्य पात्रे संस्रवान समवनयति । तद् योऽस्य पुत्रः प्रियतमो भवति तस्मा एतत्पात्रं प्रयच्छति ॥ अथ प्रतिपरेत्य गार्हपत्यमन्वारब्धे जुहोति । अथ य एष संस्रवोऽतिरिक्तो भवति तमाग्नीध्रीये जुहोति । उत्तरार्द्धे जुहोति ॥ तद् योऽस्य स्वो भवति तस्य शतं वा परः शता वा गा उत्तरेणाहवनीयं स्थापयति । अथ रथमुपावहरति । तमन्तर्वेद्य भ्यववर्त्य युनक्ति । तं चतुर्युजं युनक्ति । तं जघनेन सदोऽग्रेण शालां येनैव दक्षिणायन्ति तेन प्रतिपद्यते । तं जघनेन चात्वालमग्रेणाग्नीध्रमुद्यच्छति ॥ तमातिष्ठति—'अव्यथायै त्वा स्वधायै त्वाऽरिष्टोऽर्जुनः"–इति ॥ अथ दक्षिणायुग्यमुपार्षति । अथ मध्ये गवामुद्यच्छति । अथ धनुरात्न्र्यां गामुपस्पृशति । अथाह– "जिनामीमाः कुर्व इमाः"–इति । तत् स्वस्य गोषूद्यच्छति । तस्यै तावन्मात्रीर्वा भूयसीर्वा प्रति ददाति । अथ दक्षिणानायच्छति । सोऽग्रेण यूपं दक्षिणेन वेदिं येनैव दक्षिणायन्ति तेन प्रतिपद्यते । तं जघनेन सदोऽग्रेण शालामुद्यच्छति ॥ अथ रथ विमोचनीयानि जुहोति । अथ वाराह्या उपानहा उपमुच्यते । अथेमां प्रत्यवेक्षमाणो जपति— "पृथिवी मातर्मा माहिंसी,र्मो अहं त्वाम्"-इति ॥ सोऽवतिष्ठति ॥ तं न संग्रहीताऽन्ववतिष्ठेत् ॥ तं रथमेव रथवाहन आदधति । ततोऽवाङ्पप्रवते । उत्तरेणाहवनीयं पूर्वाग्निरुद्धृतो भवति स रथ वाहनस्य दक्षिणमन्वनुष्यन्दं शतमानौ प्रवृत्तावाबध्नाति । औदुम्बरीं शाखामुपगूहति तयोरन्यतरंमुपस्पृशति । अथौदुम्बरीं शाखामुपस्पृशति । तस्यैतस्य कर्मण एतावेव शतमानौ प्रवृत्तौ दक्षिणा । तौ ब्रह्मणे ददाति ॥ अग्रेण मैत्रावरुणस्य धिष्ण्यं मैत्रावरुणी पयस्या निहिता भवन्ति । तामस्य बाहू अभ्युपावहरति ॥ मैत्रावरुण्या पयस्य या प्रचरति तस्या अनिष्ट एव स्विष्टकृद् भवति । अथास्मा आसन्दीमाहरन्ति । सैषा खदिरी वितृणा भवति येयं वर्ध्नव्युता भरतानाम् । तामग्रेण मैत्रावरुणस्य धिष्ण्यं निदधाति । अथाधिवास मास्तृणाति । अथैनमासादयति । अथान्तरासेऽभिमृश्य जपति– "निषसाद धृतव्रतो, वरुणः पस्त्यास्वा, साम्राज्याय सुक्रतुः"–इति॥ अथास्मै पञ्चाक्षान् पाणा वा वपति। अथैनं पृष्ठतस्तुष्णीमेवदण्डैर्घ्नन्ति । अथ वरं वृणीते—स—'ब्रह्मन्'–इत्यामन्त्रयते । 'त्वं ब्रह्मासि'–इतीतरः प्रत्याह । 'सवितासि सत्य प्रसवः'–इति ॥ १ ॥ 'ब्रह्मन्'–इति द्वितीयमामन्त्रयते । 'त्वं ब्रह्मासि'–इतीतरः प्रत्याह । 'वरुणोऽसि सत्यौजाः'–इति ॥ २ ॥ ब्रह्मन्'–इति तृतीयमामन्त्रयते । 'त्वं ब्रह्मासि'-इतीतरः प्रत्याह । "इन्द्रोऽसि विशौजाः"–इति ॥ ३ ॥ "ब्रह्मन्"-इति चतुर्थमामन्त्रयते । 'त्वं ब्रह्मासि"–इतीतरः प्रत्याह । "रुद्रोऽसि सुशेवः"–इति ॥ ४ ॥ ब्रह्मन्' इति पञ्चममामन्त्रयते । 'त्वं ब्रह्मासि'–इतीतरो ऽनिरुक्तं प्रत्याह ॥ अथ सुमङ्गलनामानं ह्वयति । 'बहुकारश्रेयस्कर भूयस्कर'–इति ॥ अथास्मै ब्राह्मणः स्फ्यं प्रयच्छति ।

अध्वर्युर्वा। यो वाऽस्य पुरोहितो भवति ॥ तं राजा राजभ्रात्रे प्रयच्छति। तं राजभ्राता सूताय वा स्थापतये वा प्रयच्छति। तं सूतो वा स्थापतिर्वा ग्रामण्ये प्रयच्छति। तं ग्रामणीः सजाताय प्रयच्छति। अथ सजातश्च प्रतिप्रस्थाता चैतेन स्फ्येन पूर्वाग्नौ शुक्रस्य पुरोरुचाधिदेवनं कुरुतः। अथ मन्थिनः पुरोरुचा विमितं विमिनुतः। अथाध्वर्युश्चतुर्गृहीतमाज्यं गृहीत्वाऽधिदेवेन हिरण्यं निधाय जुहोति ॥ अथाक्षान्निवपति। पूर्वाग्निवाहौ दक्षिणा। अथाह—"अग्नये स्विष्टकृतेऽनुब्रूहि"–इति ॥ आश्राव्याह—'अग्निं स्विष्टकृतं यज'–इति। वषट् कृते जुहोति ॥ अथेडामादधाति। उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति। माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति, तं स्तोत्राय प्रमीवति। स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते स्तोत्रस्य ॥

---

## ७—संसृपो दशपेयः।

अथ संसृपो नाम दशपेयः। तदाहुः—दशपितामहान् सोमपान् संख्याय प्रसर्पेदिति। तद्वा एता एव देवताः संख्याय प्रसर्पेत्—"सवित्रा प्रसवित्रा,[1] सरस्वत्या वाचा,[2] त्वष्ट्रा रूपैः,[3] पूष्णा पशुभिः,[4] इन्द्रेणास्मे,[5] बृहस्पतिना ब्रह्मणा,[6] वरुणेनौजसा,[7] ऽग्निना तेजसा,[8] सोमेन राज्ञा,[9] विष्णुनैव दशम्या देवतया,[10] प्रसूतः प्रसर्पामि"–इति ॥ अथ यदैवैषोदवसानीयेष्टिः सं तिष्ठते एतस्याभिषेचनीयस्य, अथैतानि हवींषि निर्वपति। सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशम्। तत्रैकं पुण्डरीकं प्रयच्छति ॥ १ ॥ अथ सारस्वतं चरुं निर्वपति। तत्रैकं पुण्डरीकं प्रयच्छति ॥२॥ अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्वपति। तत्रैकं पुण्डरीकं प्रयच्छति ॥ ३ ॥ अथ पौष्णं चरुं निर्वपति। तत्रैकं पुण्डरीकं प्रयच्छति ॥ ४ ॥ अथैन्द्रमेकादश कपालं पुरोडाशं निर्वपति। तत्रैकं पुण्डरीकं प्रयच्छति ॥ ५ ॥ अथ बार्हस्पत्यं चरुं निर्वपति। तत्रैकं पुण्डरीकं प्रयच्छति ॥ ६ ॥ अथ वारुणं यवमय चरुं निर्वपति। तत्रैकं पुण्डरीकं प्रयच्छति ॥ ७ ॥ उपसदो दशम्यो देवताः। तत्र पञ्च पुण्डरीकाण्युप प्रयच्छति ॥ तां द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते। सा दीक्षा। तया दीक्षया दीक्षते ॥ अथ राजानं क्रीत्वा द्वेधोपनह्य परिवहन्ति ॥ ततोऽर्धमासन्द्यामासाद्यातिथ्ये नप्रचरति। अथ य एषोऽर्धो ब्रह्मणो गृहे निहितो भवति तमासन्द्यामासाद्यातिथ्येन प्रचरति ॥ यदा तिथ्येन प्रचरति—अथोपसद्भिः प्रचरति। यदोपसद्भिः प्रचरति, अथैतानि पवींषि निर्वपति ॥ आग्नेयमष्टाकपालं पुरोडाशं, सौम्यं चरुं, वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा,–तेन यथेष्ट्या—एव

यजते ॥ तदु तथा न कुर्य्यात् । उपसत् पश्चादेव नेयात् ॥ स एष सप्तदशोऽग्निष्टोमो भवति ॥ तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा । तां द्वादशगर्भाः । ताश्चतुर्विंशतिः॥ ता ब्रह्मणे ददाति ॥ १ ॥ हिरण्मयीं स्रजमुद्गात्रे ॥ २ ॥ रुक्मंहोत्रे ॥ ३ ॥ हिरण्मयौ प्राकाशावध्वर्युभ्याम् ॥ ५ ॥ अश्वं प्रस्तोत्रे ॥ ६ ॥ वशां मैत्रावरुणाय ॥ ७ ॥ ऋषभं ब्राह्मणाच्छंसिने ॥ ८ ॥ वाससी नेष्टा पोतृभ्याम् ॥ १० ॥ अन्यत्तरतो युक्तं यवाचितमच्छावाकाय ॥ ११ ॥ गामग्नीधे ॥ १२ ॥ ता वा एता द्वादश वा त्रयोदश वा दक्षिणा भवन्ति ॥

---

## ८—चरुः पञ्चबिलः ।

आग्नेयोऽष्टाकपालः पुरोडाशो भवति तं पूर्वार्धे आसादयति ॥ ऐन्द्र एकादश कपालः पुरोडाशो भवति सौम्यो वा चरुः । तं दक्षिणार्द्धे आसादयति ॥ वैश्वदेवश्चरुर्भवति । तं पश्चार्धे आसादयति ॥ मैत्रावरुणीपयस्या भवति तामुत्तरार्धे आसादयति ॥ बार्हस्पत्यश्चरुर्भवति तं मध्ये आसादयति ॥ एष चरुः पञ्चबिलः ॥ तदेतेन राजसूययाजीयजेत ॥ तत् संस्रवान् बार्हस्पत्ये चरावव‍नयति ॥ स य एष आग्नेयः पुरोडाशः, तस्य हिरण्यं दक्षिणा । तदग्नीधे ददाति ॥ १ ॥ अथ य एष ऐन्द्रः पुरोडाशः तस्यर्षभो दक्षिणा । यद्यु सौम्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा, तं ब्रह्मणे ददाति ॥२॥ अथ य एष वैश्वदेवश्चरुः तस्य पृषन् गौर्दक्षिणा । तं होत्रे ददाति ॥ ३ ॥ अथ यैषा मैत्रावरुणी पयस्या, तस्यै वशा दक्षिणा । यदि वशां न विन्देद्—अपि यैव का च प्रवीता स्यात् । तामध्वर्य्युभ्यां ददाति ॥ ४ ॥ अथ य एष बार्हस्पत्यश्चरुः, तस्य शितिपृष्ठो गौर्दक्षिणा । तं ब्रह्मणे ददाति ॥ सहैतेनापि पिष्ठा ब्राज्यन्नाद्यकामो यजेत, स हान्नादो भवति ॥ ५ ॥ स वै प्रयुजां हविर्भिर्यजते । तानि वै द्वादश भवन्ति । मासि मासि यजेतेत्याहुः । न मासि मासि यजेत । शम्या परा व्याधे शम्या परा व्याधे एव षड्भिर्यजते । प्राङ्पान ॥ अथ पुनरावृतः शम्या पराव्याधे शम्यापराव्याधे एव षड्भिर्यजते । तदु तथा न कुर्यात् । षडेवैतानि पूर्वाणि हवींषि निर्वपति समान बर्हींषि । पूर्वाग्निवाहां द्वौ दक्षिणा । षडेवोत्तराणि हवींषि निर्वपति समान बर्हींषि । पूर्वाग्नि वाहां द्वौ दक्षिणा । (१)—आग्नेयोऽष्टाकपालः पुरोडाशो भवति । (२)—सौम्यश्चरुः । (३)—सावित्रो द्वादशकपालो वाष्टाकपालो वा पुरोडाशः । (४)—बार्हस्पत्यश्चरुः । (५)—त्वाष्ट्रो दशकपालः पुरोडाशः । (६)—वैश्वानरो द्वादश कपालः । एतानि षट् पूर्वाणि हवींषि भवन्ति । षडेवोत्तरे चरवः—सारस्वतश्चरुः ॥ १ ॥ पौष्णश्चरुः ॥ २ ॥

मैत्रश्चरुः ॥ ३ ॥ क्षेत्रपत्यश्चरुः ॥ ४ ॥ वारुणश्चरुः ॥ ५ ॥ आदित्यश्चरुरिति ॥ ६ ॥ अथ श्येनीं विचित्रगर्भामादित्या आलभते। तस्या एषै वावृत्—याऽष्टापद्यै वशायै। तस्या एता दृश्येव श्येनी विचित्रगर्भा दक्षिणा ॥ अथ पृषतीं विचित्रगर्भां मरुद्भ्य आलभते। तस्या एषैवावृत्। तस्या एतादृश्येव पृषती विचित्रगर्भा दक्षिणा ॥ एतौ पशुबन्धौ। तदेतावेव सन्तावन्यथे वालभन्ते–यामादित्या आलभन्ते–आदित्येभ्यस्ता-मालभन्ते। यां मरुद्भ्य आलभन्ते–विश्वेभ्यस्तां देवेभ्य आलभन्ते ॥

अभिषेचनीयेनेष्ट्वा केशान्न वपते। सम्वत्सरं न वपते। स एष व्रतविसर्जनी-योपयोगो नाम स्तोमो भवति केशवपनीयः ॥ तस्यैकविंशं प्रातः सवनं, सप्तदशं माध्य-न्दिनं सवनं, पञ्चदशं तृतीय सवनम् ॥ सहोक्थैः, सह षोडशिना, सह रात्र्या। त्रिवृद् राथन्तरः सन्धिर्भवति। तस्य रथन्तरं पृष्ठं भवति। अति रात्रो भवति। स वै न्येक वर्तयते। केशान्न वपते। तस्यैषैव व्रतचर्य्या भवति यावज्जीवं नास्यां प्रतितिष्ठति। ( आसन्द्या उपानहा उप मुञ्चते। उपानड्भ्यामधि यदस्य यानं भवति. रथो वा किञ्चिद्वा, सर्वं वा एष इदमुपर्य्युपरि भवति। ) ॥

---

## ६—चरक सौत्रामणी इष्टिः।

सौत्रामण्या यजेत। श्येत आश्विनो भवति, अविर्मल्हा सारस्वती भवति। ऋषभमिन्द्राय सूत्राम्णे आलभते। दुर्वेदा एवं समृद्धाः पशवः। यद्येवं समृद्धान्न विन्देद्—अप्यजाने वालभेरन्। स यद्य जाना लभेरन्—लोहित आश्विनो भवति ॥ तदेतया राजसूय याजी यजते। अथ यदाश्विनो यत् सारस्वतो यदैन्द्रः—एतेषु पशुषु सिंहलोमानि, वृकलोमानि शार्दूललोमानीत्यावपति। तदु तथा न कुर्य्यात्! परि स्रुत्ये वा वपेत् ॥ अथ पूर्वेद्युः परिस्रुत् ॥ ... ॥ यदा परि स्रुद् भवति—अथैनया प्रचरति। द्वावग्नी उद्धरन्ति। उत्तरवेदावेवोत्तरमुद्धते दक्षिणम्। अथ यदा वपाभिः प्रचरति—अथैतया परिस्रुता प्रचरति। तां दर्भैः पावयति। तत् कुबल सक्तून्, कर्कन्धुसक्तून्, बदरसक्तूनित्यावपति। अथ ग्रहान् गृह्णाति। एकं वा त्रीन् वा ॥ एकस्त्वेव ग्रहीतव्यः। एकाहि पुरोरुग् भवति, एकाऽनुवाक्या, एका याज्या, तस्मादेक एव ग्रहो ग्रहीतव्यः अथाह—"अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णेऽनुब्रूहि"–इति। सोऽन्वाह। "युवं सुराममश्विना नमुचा वासुरे सचा। विपिपाना शुभस्पती इन्द्रं कर्म्मस्वावतम्"–इति ॥ आश्राव्याह—"अश्विनौ सरस्वतीमिन्द्रं सुत्रामाणं यज"–इति॥ स यजति। द्विर्होता वषट् करोति। द्विरध्वर्य्युर्जुहोति। आहरतिभक्षम्। यद्यु त्रीन्

गृह्णीयाद्-एतस्यैवानु होममितरौ हूयेते ॥ अथ कुम्भः शतवितृणो वा भवति नववितृणो वा । तं शिक्योदुतमुपर्य्युपर्य्योहवनीयं धारयन्ति सा या परिशिष्टा परिस्रुद् भवति तामासिञ्चति । तां विक्षरन्तीमुपतिष्ठते । पितॄणां सोमवतां तिसृभिर्ऋग्भिः, पितॄणां बर्हिषदां तिसृभिर्ऋग्भिः, पितॄणामग्निष्वात्तानां तिसृभिर्ऋग्भिः ॥ अथैतानि हवींषि निर्वपति—सवित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशम्, वारुणं यवमयं चरुम्, ऐन्द्रमेकादश कपालं पुरोडाशम्, यदि हैतयापि सोमातिपूतं भिषज्येत्—इष्टा अनुयाजा भवन्ति ॥ अव्यूढे स्रुचौ । अथैतैर्हविर्भिः प्रचरति । पश्चाद्वै सोमोऽतिपवते । पश्चादेवैनमेतेन मेवेनापि दधाति । आश्विनमुतर्हि द्विकपालं पुरोडाशं निर्वपेत् । अथ यदा वपाभिः प्रचरति—अथैतेनाश्विनेन द्विकपालेन पुरोडाशेन प्रचरति । तदु तथा न कुर्यात् । यत्र वै तेषां पशुनां वपाभिः प्रचरन्ति तदेवैतैर्हविर्भिः प्रचरेयुः, नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्वपेत् ॥ तस्य नपुंसको गौर्दक्षिणा ॥ अश्वा वा रथवाही ॥

ऐन्द्रा वैष्णवं द्वादशकपालं पुरोडाशं निर्वपति । तमुभयेषां व्रीहियवाणां गृह्णाति । व्रीहियवमेवाग्रे पिण्डमधिश्रयति । अथ यवमयम् । अथ व्रीहिमयम् ॥ सैषा राजसूययाजिन उदवसानीयेष्टिर्भवति ॥ १ ॥ अथो यः सहस्रं वा भूयो वा दद्यात्, तस्य हाप्युदवसानीयास्यात् ॥२॥ अथो ये दीर्घसत्रमासीरन् सवत्सरं वा भूयो वा, तस्य हाप्युदवसानीयास्यात् ॥३॥ अथो हैनयाऽप्यभिचरेत्-एतया वै भद्रसेन माजात शत्रवमारुणि रभिचचार, क्षिप्रं किलास्तृणुतेतिहस्माह याज्ञवल्क्यः ॥ ४ ॥ अथो हैन यापि भिषज्येत् ॥ ५ ॥ तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा । तानि ब्रह्मणे ददाति ॥ तिस्रो धेनुर्होत्रे । त्रीणि वासांस्यध्वर्य्यवे । गामग्नीधे । ता वा एता द्वादश वा त्रयोदश वा दक्षिणा भवन्ति ॥

॥ इति राजसूयः ॥

## ५—वाजपेयः बृहस्पतिसवः ॥

वाजपेयेन यजते । तदाहुः—न वाजपेयेन यजेतेति तदुवै यजेतैव । स वा एष ब्राह्मणस्यैव यज्ञः ॥ अथो राजन्यस्य । राज्ञ एव राजसूयम् । अवरं वै राजसूयं परं वाजपेयम् । राजा वै राजसूयेनेष्ट्वा भवति, सम्राड् वाजपेयेन ॥ स कर्म्मणः कर्म्मणः पुरस्तादेतां सावित्रीमाहुतिं जुहोति । स एतामेवाहुतिं जुहोति । आश्वःसुत्यायाः ॥१॥ अंशु गृह्णाति अथैतान प्रज्ञातेनवाग्निष्टोमिकान् ग्रहान् गृह्णात्याऽग्रयणात् ॥ अथ पृष्ठ्यान् गृह्णाति । अथ षोडशिनं गृह्णाति । अथ पञ्चवाजपेय ग्रहान् गृह्णाति सादयति ॥ २ ॥ अथ सप्तदश सोम ग्रहान् गृह्णाति । सप्तदश सुराग्रहान् । त उभये चतुस्त्रिंशद् ग्रहाः सम्पद्यन्ते ॥ अथ यत्र राजानं क्रीणाति तद्दक्षिणतः प्रतिवेशतः केशवात् पुरुषात् सीसेन परिस्रुतं क्रीणाति ॥ ३ ॥ अथ पूर्वद्युः द्वौ खरौ कुर्वन्ति—पुरोऽक्षमेवान्यं, पश्चादक्षमन्यम् । अथ यत्र पूर्वया द्वारा वसती वरीः प्रपादयन्ति तदपरया द्वारानेष्टापरिस्रुतं प्रपादयति । दक्षिणतः पात्राण्यभ्यवहरन्ति । पुरोऽक्षमेव प्रत्यङ्ङासीनोऽध्वर्य्युः सोमग्रहान गृह्णाति । पश्चादक्षं प्राङासीनो नेष्टा सुराग्रहान् । सोमग्रहमेवाध्वर्य्युर्गृह्णाति सुराग्रहं नेष्टा । एवमेवैतान् व्यत्यासं गृह्णीतः । न प्रत्यञ्च-मक्षमध्वर्य्युः सोमग्रहमति हरति न प्रञ्चमक्षं नेष्टा सुराग्रहम् । उपर्य्युपर्येवाक्षमध्वर्य्युः सोमग्रहं धारयति । अधोऽधोऽक्षं नेष्टा सुराग्रहम् । तौ पुनर्विहरतः । तौ सादयतः ॥ ४ ॥ अथाध्वर्य्युर्हिरण्यपात्रेण मधुग्रहं गृह्णाति । तं मध्ये सोमग्रहाणां सादयति । अथोक्थ्यं गृह्णाति । अथ ध्रुवम् । अथैतान् सोमग्रहानुत्तमे स्तोत्रे ऋत्विजां चमसेषु व्यवनीय जुह्वति । तान् भक्षयन्ति । अथ माध्यन्दिने सवने मधुग्रहस्य च सुराग्रहाणां चोद्यते तस्यातः ॥

आग्नेयमग्निष्टोम आलभते ॥ १ ॥ ऐन्द्राग्नमुक्थेभ्य आलभते ॥ २ ॥ ऐन्द्रं षोडशिने आलभते ॥ ३ ॥ सारस्वतं सप्तदशाय स्तोत्रायालभते—एतदनतिरात्रे सति रात्रे रूपं क्रियते ॥ ४ ॥ अथ मरुद्भ्य उज्जेषेभ्यो वशां प्रश्निमालभते ॥ दुर्वेदे उज्जेष-वत्यौ याज्यानुवाक्ये । यद्युज्जेषवत्यौ न विन्देद् अपि ये एव केच मारुत्यौ स्याताम् । दुर्वेदो एव वशा पृश्निः । यदि वशां पृश्निं न विन्देद्-अपि यैव काच वशा स्यात् ॥ तस्या आवृत्-यत्र होता माहेन्द्रं ग्रहमनुशंसति तदस्यै वपया प्रचरेयुः । द्वैधावदानानि श्रपयन्ति ततोऽर्द्धानां जुह्वामुपस्तीर्य्य द्विर्द्विरवद्यति, सकृदभिधारयति, प्रत्यनक्त्य वदानानि, अथोपभृति सकृत सकृदवद्यति, द्विरभिधारयति, न प्रत्यनक्त्य वदानानि ॥

अथार्द्राणि मानुष्यै विशे उपहरति । तदु तथा न कुर्यात् । यत्रैवेतरेषां पशूनां वपाभिः प्रचरन्ति तदेवैतस्यै वपया प्रचरेयुः । एकधाऽवदानानि श्रपयन्ति, न मनुष्यै विशे-उपहरन्ति ॥ ५ ॥ अथ सप्तदश प्राजापत्यान् पशूना लभते । ते वै सर्वे तूपरा भवन्ति— तूपरो वा अविषाणः सर्वे श्यामाः सर्वे मुष्कराः । प्रजननं वैमुष्करः । दुर्वेदा एव समृद्धाः पशवः । यद्येवं समृद्धान्न विन्देत्–अपि कतिपया एवैवं समृद्धाःस्युः ॥ तद्धैके-वाच उत्तम मालभते तदु तथा न कुर्यात् ॥ अथ तेषामावृत्–यत्र मैत्रावरुणो वामदेव्य मनुशंसति तदेषां वपाभिः प्रचरेयुः ॥ अयेष्टा अनुयाजा भवन्ति अव्यूढेस्रुचौ । अथैषां हविर्भिः प्रचरन्ति सोऽन्नः । तदु तथा न कुर्यात् । यत्रै वे तरेषां पशूनां वपाभिः प्रचरन्ति तदेवै तेषां वपाभिः प्रचरेयुः ॥ यत्रैवेतरेषां पशूनां हविर्भिः प्रचरन्ति तदेवैतेषां हविषा प्रचरेयुः ॥ एकाऽनुवाक्या, एका याज्या ॥ उपांशूकृत्वा "छागानां हविषोऽनुब्रूहि"–इति ॥ 'प्रजापतये'–इति ॥ उपांशूकृत्वा 'छागानां हविः प्रस्थितं प्रेष्य–'इति । वषट् कृते जुहोति ॥

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । अगृहीते माहेन्द्रे ॥ अथ रथमुपावहरति । तं धूर्गृहीतमन्तर्वेद्यभ्यववर्तयति ॥ अथाश्वानद्भिरभ्युक्षति स्नपनायाभ्यवनीयमानान्, स्नपितान् वोदानीतान ॥ अथ रथं युनक्ति । स दक्षिणायुग्मेवाग्रे युनक्ति ॥ सव्यायुग्यं वाऽग्रे मानुषे, ऽथैवं देवत्रा ॥ अथ सव्यायुग्यं युनक्ति । अथ दक्षिणाप्रष्टिं युनक्ति । सव्याप्रष्टिं वा मानुषेऽथैवंदेवत्रा । ते वा एत एव त्रयो युक्ता भवन्ति । तद्धि देवत्रा । अधिप्रष्टि युग एवचतुर्थोऽन्वेति, मानुषो हि सः । तं यत्र दास्यन् भवति तच्चतुर्थमुपयुज्य ददाति ॥ अथ वार्हस्पत्यं चरुं नैवारं सप्तदश शरावं निर्वपति । तमश्वानवघ्रापयति ॥ स ब्रह्मारथचक्र- मधिरोहति नाभिदघ्न उद्धितम् । त्रिः सामाभिगायति । त्रिरभि गीयावरोहति ॥ अथ सप्तदशदुन्दुभीननुवेद्यन्तं समिन्वन्ति प्रतीच आग्नीध्रात् ॥ अथैतेषां दुन्दुभीनामेकं यजुषोऽपावहरति ॥ अथै तेष्वाजिसृत्सु रथेषु पुनरासृतेष्वेतेषां दुन्दुभीनामेकं यजुषो पावहरति । अथ वेद्यन्ताद् राजन्य उदङ् सप्तदश प्रव्याध्यान् प्रविध्यति । अथ यं यजुषा युनक्ति ते यजमान आतिष्ठति । अथ यद्यध्वर्यो रन्तेवासी वा ब्रह्मचारी वैतद् यजुरधी यात् सोऽन्वास्थाय वाचयति-"वाजिनो वाजजितोऽध्वनः स्कभ्नुवन्तो योजना मिमानाः काष्ठां गच्छन्त-"इति ॥ धावन्ति आजिमाघ्नन्ति, दुन्दुभीनभि साम गायति ॥ अथ जुहोति । अथोत्तरेण त्रिचेनानुमन्त्रयते—

"शंनो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्न मीवाः ॥१॥ तेनो अर्वन्तो हवनश्रुतो हवं विश्वेशृण्वन्तु वाजिनो मितद्रवः ।

सहस्रसा मेधसाता सनिष्णवो महो ये धनं समिथेषु जभ्रिरे ॥२॥ वाजेवाजेऽवत वाजिनो नोधनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः" ॥ ३ ॥ इति ॥ अथ बार्हस्पत्येन चरुणाप्रत्युपतिष्ठते तमुपस्पृशति । तमश्वान वघ्रापयति ॥ अथै तेषामाजिश्रितां रथानामामेकस्मिन् वैश्यो वा राजन्यो वोपास्थितो भवति स वेदे रुत्तरायाश्रोणा उपविशति । अथाध्वर्य्युश्च यजमानश्च पूर्वया द्वारा मधुग्रहमादाय निष्क्रमतः । तं वैश्यस्य वा राजन्यस्य वा पणावाधत्तः । अथ नेष्टा परया द्वारा सुराग्रहानादाय निष्क्रामति । स जघनेन शालां पर्य्येत्यैकं वैश्यस्य वा राजन्यस्य वा पाणावादधदाह-'अनेन त इमं निष्क्रीणामि'-इति ॥ तैः स यं भोगं कामयते तं कुरुते ॥ अथै तं स हिरण्य पात्रमेव मधुग्रहं ब्रह्मणे ददाति । तेन स यं भोगं कामयते तं कुरुते ॥

अथ स्रुवं चाज्यविलापनीं चादायाहवनीयमभ्यैति स एता द्वादशाप्तीर्जुहोति वा वाचयति वा । "आपये स्वाहा, स्वापये स्वाहा, अपिजाय स्वाहा, क्रतवे स्वाहा, वसवे स्वाहा, अहर्पतये स्वाहा, अह्ने मुग्धाय स्वाहा, मुग्धाय वैनं शिनाय स्वाहा, विनं शिन आन्त्यायनाय स्वाहा, अन्त्याय भौवनाय स्वाहा, भुवनस्य पतये स्वाहा अधिपतये स्वाहा, इति ॥ अथ षट्क्लृप्तीर्जुहोति वा वाचयति वा—"आयुर्यज्ञेन कल्पतां, प्राणोयज्ञेन कल्पतां, चक्षुर्यज्ञेन कल्पतां, श्रोत्रं यज्ञेन कल्पतां, पृष्ठं यज्ञेन कल्पतां, यज्ञो यज्ञेन कल्पताम्-"इति ॥ अष्टाश्रिर्यूपो भवति॥ स सप्तदशभिर्वा सोभियूपो वेष्टितो वा विग्रथितो वा भवति । गौधूम चषालं भवति । गर्तन्वान् यूपोऽतीदणाम्रो भवति । सप्तदशारत्निर्भवति ॥ अथ नेष्टा पत्नीमुदानेष्यन् कौशं वासः परिधापयति । कौशं वा चण्डातक मन्तरं दीक्षित वसनात् । अथ निश्रयणि निश्रयति । स दक्षिणतः उदङ् रोहेत्, उत्तरतो वा दक्षिणा । दक्षिणतस्त्वे वोदङ् रोहेत् । स रोहयन् जायामा मन्त्रयते-'जायाएहि स्वो रोहाव-'इति । स रोहति । अथ गोधूमानुपस्पृशति । अथ शीर्ष्णा यूप मत्युज्जिहीते । अथ दिशोऽनु वीक्षमाणो जपति- 'अस्मे वो अस्त्विन्द्रिय, मस्मेनृम्ण, मुत क्रतुः. अस्मे वर्चांसि सन्तुवः-"इति अथैन मूषपुटैरनूदस्यन्ति । आश्वत्थेषु पलाशेपूपनद्धा भवन्ति, विशोऽनूदस्यन्ति । सप्तदश भवन्ति । अथेमामुपावेक्षमाणो जपति-"नमो मात्रे पृथिव्यै, नमो मात्रे पृथिव्यै"-इति । अथ हिरण्यमभ्यवरोहति । अथाजर्षभस्याजिनमुपस्तृणाति । तदुपरिष्टाद् रुक्म निदधाति । तमभ्यवरोहति । इमां वैव ॥ अथा स्मा आसन्दी माहरन्ति । औदुम्बरी भवति । तामग्रेण हविर्धाने, जघनेना हवनीयं निदधाति । अथाजर्षभस्याजिन मास्तृणाति । अथैन मासादयति ॥

बार्हस्पत्येन चरुणा प्रचरति । तस्यानिष्ट एव स्विष्ट कृद् भवति । अथास्मा अन्नं संभरति औदुम्बरे पात्रे ॥ सोऽप एव प्रथमाः संभरति । अथ पयः । अथ यथोपस्मार-मन्नानि ॥ तद्धैके-सप्तदशान्नानि संभरन्ति । तदु तथा न कुर्य्यात् । सर्वमेवान्नं यथोपस्मारं संभरन्नेक मन्नं न संभरेत् ॥ स यन्न संभरति तस्योद्ब्रुवीत तस्य नाश्नीयाद् यावज्जीवं, तथा नान्नमेति तथा ज्योग्जीवति । स एतस्य सर्वस्यान्नाद्यस्य संभृतस्य स्रुवेणोपघातं वाज प्रसवीयानि जुहोति । अथैनं परिशिष्टे नाभिषिञ्चति । अथाह त्रिष्कृत्वः—"सम्राडयमसौ सम्राडयमसौ"–इति ॥ अथ ज्जितीर्जुहोति वा वाचयतिवा– "अग्निरेकाक्षरेण प्राणमुदजयत्, तमुज्जेषम् । प्रजापतिः सप्तदशाक्षरेण सप्तदशं स्तोम मुदजयत्, तमुज्जेषम्"–इति ॥ अथाह–"अग्नये स्विष्टकृतेऽनुब्रूहि"–इति । आश्राव्याह– "अग्निं स्विष्ट कृतं यज–"इति वषट् कृते जुहोति ॥ अथेडामादधाति । उपहूतायामिडा-यामप उपस्पृश्य, माहेन्द्रं ग्रहं गृह्णाति । माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपा करोति । तं स्तोत्राय प्रमीवति । स उपावरोहति । सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ तद्धैके एतत्कृत्वाऽथैं तत्कुर्वन्ति तदु तथा न कुर्य्यात् । स यजमानं प्रणाशयति, स जिह्म एति, स ह्वलति । तस्मात् एतदेव कृत्वाऽथैतत्कुर्यात् ॥ अथेडा मादधाति । उपहूता या मिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति, माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तं स्तोत्राय प्रमीवति स उपावरोहति । सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ।

॥ इति वाजपेयः ॥

## ॥ इति अतियज्ञस्तृतीयं प्रकरणं समाप्तम् ॥

---

# ४—अथ शिरोयज्ञश्चतुर्थं प्रकरणम् ।

( यज्ञशिरः प्रतिधानम् )

यज्ञो वै विष्णुः । सौऽसावादित्यः । तस्य छिन्नं शिरः पपात सधर्म्मः । अथेतरः प्राङेव प्रावृज्यत् । स प्रवर्ग्यः । सोऽयं महावीरः । तस्य यो रसो व्यक्षरत् स सम्राट् । तमेतं यज्ञं त्रेधा व्यभजन्त—वसवः प्रातः सवनं, रुद्रा माध्यन्दिनं सवनम, आदित्यास्तृतीय सवनम ।। अग्निः प्रातः सवनम्, इन्द्रो माध्यन्दिनं सवनम्, विश्वेदेवास्तृतीयसवनम् ।। गायत्री प्रातः सवनम्, त्रिष्टुब् माध्यन्दिनं सवनं, जगती तृतीयसवनम् ।। तेनाप शीर्ष्णा यज्ञेन देवा अर्चन्तः श्राम्यन्तश्चेरुः ।। दध्यङ्‌ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदां चकार—यथा यथैतत् यज्ञस्य शिरः प्रतिधीयते तथैष कृत्स्नो यज्ञो भवति । तन्न सर्वस्मा अनुब्रूयात् । यो न्वेव ज्ञातस्तस्मै ब्रूयात् । अथ योऽनूचानः अथ योऽस्य प्रियः स्यात् । नत्वेव सर्वस्मा इव ।। संवत्सर वासिनेऽनुब्रूयात् ।। त्रिस्रो रात्रीर्व्रतं चरति, तप्तमाचामति, अनांसाश्यनुब्रूते, अमृन्मयपायी अशूद्रोच्छिष्टी । स्त्रीशूद्रः श्वा कृष्णः शकुनिः, एतानि न प्रेक्षेत ।। यामस्मै दक्षिणामानयेयुर्न ता इत्सद्योऽन्यस्मा अतिदिशेत । श्वो वैव भूतेऽह्वि वा तदामन्ये वैतद्यशः कृत्वा यदेव तद्भवति तत्स ददाति हिरण्यं गां वासोऽश्वं वा ।। अथैतद्वा आयुरेतज्ज्योतिः प्रविशति य एतमनुवा ब्रूते, भक्षयति वा । तस्य व्रतचर्य्या—नातपति प्रच्छादयेत, नातपति निष्ठीवेत्, नातपति प्रस्रावयेत ।। अवज्योत्य रात्रावश्नीयात् ।। तदुहोवाचासुरिः—एकं ह वै देवाव्रतं चरन्ति यत् सत्यं, तस्मात् सत्यमेव वदेत् ।।

स वै संभारान् संभरति । कृष्णाजिनं संभरति लोमतः । उत्तरतः प्राचीनग्रीवेऽभ्र्या । साऽभ्रिरौदुम्बरी भवति, अथो वैकङ्कती । अरत्निमात्री । तां सव्ये पाणौ कृत्वा दक्षिणेनाभिमृश्य मृत्पिण्डं परिगृह्णाति । अभ्र्या च दक्षिणतो हस्तेन च । हस्ते नैवोत्तरतः ।१। अथ वल्मीकवपाम् ।२। अथ वराहविहतम् ।३। अथा दारानपूतीकाः ।४। अथाजाक्षीरम् ।५। तान् वा एतान् पञ्च संभारान् संभरति । तान् संभृतानभिमृशति । अथोत्तरतः परिश्रितं भवति । तदभि प्रयन्तो जपन्ति—प्रैतु ब्रह्मणस्पत इत्येता मृचम् । अथ खरे सादयति ।। अथ मृत्पिण्डमुपादाय महावीरं करोति प्रादेशमात्रं मध्ये संगृहीतम् । अथास्योपरिष्टात् त्र्यङ्गुलं मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधाति । तं निष्ठितमभिमृशति—“मखस्य शिरोऽसीति ।” एवमितरौ । तूष्णीं पिन्वने, तूष्णीं रौहिण-

कपाले ॥ अथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः ॥ अथ गवेधुकाभिर्हिन्वति । एवमितरौ । तूष्णीं पिन्वने, तूष्णीं रौहिण कपाले । एवमग्रेऽपि ॥ अथै तान् धूपयति, श्रपयति । तदुयेनैव सुश्रृताः स्युस्तेन श्रपयेत् । अथ पचनमवभाय महावीर मवदधाति । तान् दिवै वोपवपेत् । अथैनानाच्छृणति । अथैतद्वाआयुरेतज्ज्योतिः प्रविशति य एत मनुवाव्रते भत्तयति वा तस्य व्रतचर्य्या या सृष्टौ ॥

स यदै तदातिथ्येन ऽचरति । अथ प्रवर्ग्येण चरिष्यन्, पुरोपसदोऽग्रेण गार्हपत्यं, प्राचः कुशान् संस्तीर्य्य, द्वन्द्वं पात्राण्युपसादयति-उपयमनीं, महावीरं परीशासौ, पिन्वने, रौहिण कपाले, रौहिणहवन्यौस्रुचौ, यदुचान्यद्भव त । तद्दश । अथाध्वर्य्युः प्रोक्षणीरादायोपोतिष्ठन्नाह-'ब्रह्मन् प्रचरिष्यामो, होतरभिष्टुहि' इति । प्रतिपद्यते होता । 'ब्रह्म जज्ञानं प्रथमं पुरस्ताद्'-इति । अथ प्रोक्षति । पूर्वया द्वारा स्थूणां निर्हृत्य दक्षिणतो निमिन्वन्ति यथैनां होताभिष्टुवन् परापश्येत् तथैषा घर्म्मं पिन्वते । अग्रेणाहवनीयं सम्राडासन्दीं पर्य्याहृत दाक्षणतः प्राचीमासादयति, उत्तरां राजा सन्दीं ॥ औदुम्बरी भवत्यं सदृना बाल्वजीभीरज्जुभिर्व्यता ॥ अथ यदुत्तरत आसादयति । यत्रैतां होताऽन्वाह-"अञ्जन्ति यं प्रथयन्तो न विप्राः"-इति । तदेतं प्रचरणीयं महावीरमाज्येन समनक्ति ॥ अथोत्तरतः सिकता उपकीर्णा भवन्ति, तद्रजतं हिरण्यमधस्तादुपास्यति । स यत्रै तां होताऽन्वाह-"संसीदस्व महाँ असि" ॥ इति । तदुभयत आदीप्ता मौञ्जाः प्रलवा भवन्ति तानुपास्य तेषु प्रवृणक्ति । तस्मिन् प्रवृज्यमाने पत्नी शिरः प्रोर्णुते । अथास्यामाशिष आशास्ते-अनाधृष्या पुरस्तादग्नेराधिपत्ये-आयुर्मेदाः ।१ पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये-प्रजां मेदाः ।२। सुषदा पश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्मेदाः ।३। आश्रुतिरुत्तरतो धातुराधिपत्ये-रायस्पोषं मेदाः ।४। विधृतिरुपरिष्टाद् बृहस्पते राधिपत्ये ओजोमेदाः ५। अथ दक्षिणत उत्तानेन पाणिनानिह्नुते-'विश्वाभ्यो मानाष्ट्राभ्यस्पाहि' इति ॥ अथैमामभिमृश्य जपति-'मनोरश्वासि'-इति । अथ वैकङ्कतौ शकलौ परिश्रयति प्राञ्चौ 'स्वाहा मरुद्भिः परिश्रीयस्व'-इति । तूष्णीमुदञ्चौतूष्णींप्राञ्चौ, तूष्णीमुदञ्चौतूष्णीं प्राञ्चौ, त्रयोदश संपादयति । अथ सुवर्णं हिरण्यमुपरिष्टान्निदधाति । अथ धवित्रैराधूनोति । मधुमश्विति त्रिः । अथाप सलवित्रैर्धुन्वन्ति । श्रपयन्ति रौहिणौ । स यदार्चिर्जायतेऽथ हिरण्यमादत्ते । स यत्रैता होतान्वाह-"अप्नस्वतीमश्विना वाचमस्मे"-इति । तदध्वर्य्युरुपोत्तिष्ठन्नाह-रुचितोधर्म्म इति । सयदि रुचितः स्याच्छ्रेयान् यजमानो भविष्यतीति विद्यात् । अथ यद्यरुचितः, पापीयान् भविष्यतीति विद्यात् यथान्वेव रुचितः स्यात् तथा धवित्रव्यः ॥ स यदैतदध्वर्य्युरुपोत्तिष्ठन्नाह-रुचितो घर्म्म इति, तदुपोत्थायावकाशैः षडुपतिष्ठन्ते-"गर्भो देवानां पिता

मतीनां सं देवो देवेन सवित्रागत, सं सूर्यो रोचते ॥ १ ॥ समग्निरग्निनागत, सं दैव्येन सवित्रा, सं सूर्य्येणारोचिष्ट ॥ २ ॥ स्वाहा समग्निस्तपसागत. सं दैव्येन सवित्रा, सं सूर्य्येणारूरुचत ॥ ३ ॥" ते वा एते त्रयोऽवकाशा भवन्ति ॥ "धर्तादिवोविभाति तपसस्पृथिव्यां देवोदेवानाममर्त्यस्तपोजाः । वाचमस्मेनियच्छदेवायुवम् ॥ १ ॥ अपश्यं गोपामनिपद्यमान मा च परा च पथिभिश्चरन्तम् । सध्रीचीः स विषूचीर्वसानो रश्मीनावरीवर्तिभुवनेष्वन्तः ॥ २ ॥ विश्वासां भुवां पते, विश्वस्य मनसस्पते । विश्वस्य वचसस्पते । देवश्रुत्व देवधर्म्म देवो देवान् पाहि ॥ ३ ॥ अत्र प्रावीरनुवां देववीतये मधुमाध्वीभ्य म् । मधुमधूचीभ्याम् । हृदेत्वा मनसेत्वा दिवेत्वा सूर्य्यायत्वा । ऊर्ध्वो अध्वरं दिवि देवेषु धेहि ॥ ४ ॥ पितानोऽसि पितानोबोध, नमस्ते अस्तु मा मा हिंसीः ॥ ५ ॥' अथ पत्न्यै शिरोऽपवृत्य महावीर मीक्षमाणां वाचयति— त्वष्टृमन्तस्त्वा समेय' इति ॥

अथातो रौहिणौ जुहोति । 'अह केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहा'-इत्युभावेनेन यजुषा प्रातः । 'रात्रिः केतुनाजुषतां सुज्योतिर्ज्योतिषा स्वहा'- इत्युभावे तेन यजुषा सायम् ॥ अथ रज्जुमादत्ते । अथ गामाह्वयति । जघनेन गार्हपत्य यन् । 'इड एहि, अदित एहि, सरस्वत्येहि'-इति । तामागतामभिदधाति—'अदित्यैरास्नासीन्द्राण्या उष्णीष'-इति ॥ अथ वत्सम्मुपार्जति । 'पूषासीति' । अथोन्नयति—'धर्मायदीष्वेति' । अथ पिन्वते पिन्वयति । "अश्विभ्या पिन्वस्व । सरस्वत्यै पिन्वस्व । इन्द्राय पिन्वस्वेति"। अथ विप्रुषोऽभिमन्त्रयते—'स्वाहेन्द्रवत् स्वाहेन्द्रवत्'-इति त्रिष्कृत्व आह ॥ अथास्यै स्तनमभि पद्यते—"यस्तेस्तनः शशयो यो मयो भूर्यो रत्नधा वसुविधः सुदत्रः । येन विश्वापुष्यसिवर्य्याणि सरस्वति तमिह धातवेऽकः'-इति । अथ गार्हपत्यस्यार्धमैति । अथ शफावादत्ते । मौञ्जेन वेदेनोपमार्ष्टि । अथोपयमन्योपगृह्णाति । अथाजाक्षीरमानयति । तप्तो वा एष शुशुचानो भवति, तमेवैतच्छमयति, तस्मिच्छान्ते गोक्षीरमानयति ॥ "इन्द्राश्विना मधुनः सारघस्य घर्म्मपात्त वसवो वासयन्ते । यजतवाट् स्वाहा सूर्यस्य रश्मये वृष्टिवनये" ॥ सयत्रैतां होताऽन्वाह-'प्रैतु ब्रह्मणस्पतिः प्रदेव्येतु सूनृता'-इति । तदध्वर्य्युः प्राङुदायन् वातनामानि जुहोति । समुद्राय त्वा वाताय स्वाहा', सरिराय त्वा वाताय स्वाहा[2], अनाधृष्याय त्वा वाताय स्वाहा[3], अप्रतिधृष्याय त्वा वाताय स्वाहा[4], अवस्यवे त्वा वाताय स्वाहा[5], शिमिदाय त्वा वाताय स्वाहा[6], इन्द्राय त्वा वसुमते रुद्रवते स्वाहा[7], इन्द्राय त्वादित्यवते स्वाहा[8], इन्द्राय त्वाभिमातिघ्ने स्वाहा[9], सवित्रे त्वा ऋभुमते बाजवते स्वाहा[10], बृहस्पतये त्वा विश्वदेव्यावते स्वाहा[11], यमाय त्वाङ्गिरस्वते पितृमते स्वाहा[12] ॥ द्वादशैतानि नामानि भवन्ति ॥ अथोपयमन्या महावीरमानयति आनीते जपति 'स्वाहा धर्मः पित्रे' इति ॥ नानुवाक्या मन्वाह, अतिक्रम्य

श्राव्याह–'घर्मस्य यज'–इति। वषट् कृते जुहोति। अथ हुत्वोर्ध्वमुत्कम्पयति। अनुवषट् कृते जुहोति॥ अथ ब्रह्मानुमन्त्रयते "अश्विना घर्मं पातं हार्द्वान महर्दिवाभिरूतिभिः। तन्त्रायिणो नमो द्यावा पृथिवीभ्याम्" इति॥ अथ यजमानः–'अपातामश्विना घर्म्म मनु द्यावा पृथिवी अमंसाताम्' इति॥ अथ पिन्वमानमनुमन्त्रयते–"इषे पिन्वस्व, ऊर्जे पिन्वस्व, ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व, द्यावापृथिवीभ्यांपिन्वस्व" इति॥ स यदूर्ध्वः पिन्वते तद् यजमानाय पिन्वते। यत्प्राङ् तद्देवेभ्यः। यद्दक्षिणातत्पितृभ्यः यत्प्रत्यङ् तत्पशुभ्यः। यदुदङ् तत् प्रजायाः। अनपराद्धं न्वेव यजमानस्योर्ध्वोह्येव पिन्वति। अथ यां दिशं पिन्वते तां पिन्वते। यदा साम्यन्ति विप्रुषः॥ अथ प्राङ्क्वोदङ्ङुत्क्रामति। अथ खरे सादयति॥ अथ शाकलैर्जुहोति। हुत्वा हुत्वा मध्यमे परिधा वपश्रयति–स्वाहा ग्रावभ्यः १, स्वाहा प्रतिखेभ्यः २. स्वाहा पितृभ्यः, ऊर्ध्वबर्हिभ्यो घर्मपावभ्यः ३, इति, एतदहुत्वैवोदङ्ङीक्षमाणो दक्षिणार्द्धेवहिषे उपगूहति अथयन्न प्रेक्षते। सकृदुह्येव परञ्चः पितरः॥ स्वाहा द्यावापृथिवीभ्याम् ४, स्वाहा, विश्वेभ्यो देवेभ्यः ५ स्वाहा रुद्राय रुद्रहूतये'–इत्यहुत्वैव दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति तं स उत्तरतः शालाया उदञ्चं निरस्यति॥ सप्तैता आहुतयो भवन्ति॥ अथ महावीरादुपयमन्यां प्रत्यानयति॥ अथ रौहिणौ जुहोति। अथ यजमानाय घर्म्मोच्छिष्टं प्रयच्छति। स उपहवमिष्ट्वा भक्षयति॥

अथ दक्षिणतः सिकता उपकीर्णा भवन्ति। तन्मार्जयन्ते। अनुप्रहरति शाकलान् अथोप सदा चरन्ति। तं न प्रथमयज्ञे प्रवृञ्ज्यात्। द्वितीये वैव तृतीये वा। तं न सर्वस्मा इव प्रवृञ्ज्यात्, योन्वेव ज्ञातस्तस्मै प्रवृञ्ज्यात्, योवाऽस्य प्रियः स्यात्, यो वानूचानः–अनूक्ते नैनं प्राप्नुयात्॥ सहस्रे प्रवृञ्ज्यात् ।सर्वे वेदसे प्रवृञ्ज्यात् विश्वजिति सर्वपृष्ठे प्रवृञ्ज्यात्। वाजपेये, राजसूये प्रवृञ्ज्यात्। एतान्यस्य प्रवर्जनानि· अतो नान्यत्र॥

तदाहुः। यदपशिरा अप्रवर्ग्यः–अथ केनास्याग्निहोत्रं शीर्षण्वद्भवति इति। आहवनीयेति ब्रूयात्॥ १॥ कथं दर्शपूर्णमासाविति। आज्येन च पुरोडाशेन चेति ब्रूयात्॥ २॥ कथं चातुर्मास्यानीति। पयस्ययेति ब्रूयात्॥ ३॥ कथं पशुबन्ध इति। पशुना च पुरोडाशेन चेति ब्रूयात्॥४॥ कथं सौम्योऽध्वर इति। हविर्द्धाने नेति ब्रूयात्॥५॥ अथो आहुः आतिथ्यं ह वा अस्य शीर्षाच्छिन्नस्य यज्ञस्य शिरः॥ अथो आहुः–अन्यत्र प्रणीताः प्रणयन्ति यज्ञे, अथात्र न प्रणयन्ति। प्रवर्ग्योह्यत्र क्रियते॥१॥ प्रयाजानुयाजा अन्यत्र भवन्ति, अत्र, न भवन्ति। अवकाशाश्च शाकलाश्चात्र क्रियन्ते॥२॥ आज्यभागावन्यत्र जुह्वति। अत्र न जुहोति। रौहिणौह्यत्र क्रियते॥३॥ वानस्पत्यैर्देवेभ्योऽन्यत्र जुह्वति, मृन्मयेनैवैतं जुहोति। मृदियं पृथिवी आपोऽसौ द्यौः।

तन्मृदश्चापां च महावीराः कृता भवन्ति । मृदश्चापश्चद्यावापृथिवी । स इमे यज्ञस्यशीर्षच्छिन्नस्यरसोऽगच्छत् तस्मान्मृन्मयेनैवैतं जुहोति ॥ स यद्दारुमयः स्यात्–प्रदह्येत । यद्धिरण्मयः स्यात्–प्रलीयेत । यल्लोहमयः स्यात्–प्रसिच्येत । यदश्मयः स्यात्–प्रदहेत् परीशासौ । तस्मान्मृन्मये नैवैतं जुहोति ॥ ४ ॥

स वै तृतीयेऽहन् षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयति । यदेतमभितो भवति तत्सर्वं समादायाग्रेण शालामन्तर्वेद्युपसमायान्ति । अथाग्नीध्र आहवनीये त्रीन् छालाकानुपकल्पयते, तेषामेकमुज्ज्वलय्य मुखदघ्ने धारयमाणो जुहोति । अथ द्वितीयमुज्ज्वलय्य नाभिदघ्ने धारयमाणो जुहोति ॥ अथ तृतीयमभ्याधाय तस्मिन्नासीनो जुहोति । अथोपनिष्क्रामति ॥ अथाह 'साम गायेति, सामब्रूहीति वा । गायेति त्वेव ब्रूयात् ॥ आग्नेय्यां गायति–'अग्निष्टपति प्रतिदहत्य हावोऽहावः' इति ॥ त उदञ्चो निष्क्रामन्ति । जघनेन चात्वाल, मग्रेणाग्नीध्रम् । एषा हि यज्ञस्यद्वाः । स यस्यां ततो दिश्यापो भवन्ति तदयन्ति । तं वै परिष्यन्द उत्सादयेत् ॥ उत्तरवेदौत्वेवोत्सादयेत् । उत्तरनाभ्या संस्पृष्टम् ॥ प्रथमं प्रवर्ग्यमुत्सादयति, एवमितरौ प्राञ्चौ । तत् त्रिवृत् ॥ पुरस्तादपशयां मृदम् । तदभितः परीशासौ । अभितः परे रौहिणहवन्यौ स्रुचौ ॥ उत्तरतोऽभ्रिम् । दक्षिणतः सम्राडासन्दीम् । उत्तरतः कृष्णाजिनम् । सर्वतो धवित्राणित्रीणि । अथैतद् रज्जुसंदानम् । उपमन्या माधाय पश्चात् प्राचीमासादयति । तदभितः पिन्वने । पश्चात् स्थूणामयूखम् । पश्चाद्रौहिणकपाले । पश्चाद्धृष्टी । उत्तरतः खरौ प्रचरणीयौ । दक्षिणतो मार्जालीयम् । अथास्मिन् पय आनयति । सवै न सर्वमिवानयेत् । अर्धं वा भूयो वा परिशिनष्टि । तस्मिन्नपराह्णे यजमानाय व्रतमभ्युत्सिच्य प्रयच्छति । अथैन मद्भिः परिषिञ्चति त्रिष्कृत्वः ॥ अथाह–वार्षाहरं सामगायेति । अथ चात्वाले मार्जयन्ते । यामस्यादिशं द्वेष्यः स्यात् तां दिशं परासिञ्चेत् ॥ अथ प्राङिवोदङ्ङुत् क्रामति । अनपेक्षमेत्या हवनीये समिधमभ्यादधाति ॥ अथ प्रसुते दधिघर्मेणाचरन्ति ॥ माध्यन्दिने सवने, स्तुते माध्यन्दिने पवमानेऽग्निहोत्रहवण्या ॥ स आनीयमान आह । 'होतर्वदस्व यत्ते वाद्यमिति' । वदते ह्यत्र होता । अथोपोत्तिष्ठन्नाह–'श्रातं हविरिति' अति क्रम्या श्राव्याह । दधिघर्म्मस्य यजेति । वषट् कृते जुहोति । अनुवषट् कृते अहरति भक्षं, तं यजमानाय प्रयच्छति ॥ स उपहवमिष्ट्वा भक्षयति ॥ अथ चात्वाले मार्जयन्ते ॥

अथातो दक्षिणानाम् । सुवर्णं हिरण्यं शतमानं ब्रह्मणे ददाति । अथ यैषा ब्रह्मदुघा ता मध्वर्य्यवे ददाति ॥ अथ यैषा यजमानस्य व्रतदुघा तां होत्रे ददाति ॥ अथ पत्न्यै व्रतदुघा तामदुगातृभ्यो ददाति ।

वि वा एष प्रजया पशुभिर्ऋध्यते यस्य धर्मो विदीर्यते । तत्र प्रायश्चित्तिः पूर्णाहुतिं जुहोति । स्वाहा प्राणेभ्यः साधिपतिकेभ्यः, प्रथिव्यै स्वाहा, अग्नये स्वाहा । अन्तरिक्षाय स्वाहा, वायवे स्वाहा दिवे स्वाहा, सूर्याय स्वाहा । दिग्भ्यः स्वाहा, चन्द्राय स्वाहा, नक्षत्रेभ्यः स्वाहा । अद्भ्यः स्वाहा, वरुणाय स्वाहा । नाभ्यै स्वाहा पूताय स्वाहेति ॥ त्रयोदशैता आहुतयो भवन्ति ॥ वाचे स्वाहा, प्राणाय स्वाहा, चक्षुषे स्वाहा, श्रोत्राय स्वाहा, सप्तैता आहुतयो भवन्ति ॥ पूर्णाहुतिमुत्तमां जुहोति ॥ मनसः काम माकूतिं, वाचः सत्यमशीय, पशूनां रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा"–इति ॥ अथ तं चोपशयां च पिष्ट्वा मार्त्स्नया मृदा संसृज्यावृता करोति, आवृतापचति, उत्सादनार्थम् । अथ य उपशयोर्द्द ढः स्यात् तेन प्रचरेत् ॥

संवत्सरो वै प्रवर्ग्यः । स प्रवृक्तो वसन्तः, रुचितोग्रीष्मः पिन्वितो वर्षाः ॥ १ ॥ लोकावै प्रवर्ग्यः । स प्रवृक्तोऽयं लोकः, रुचितोऽन्तरिक्षलोकः, पिन्वितोऽसौलोकः ॥२॥ देवतावैप्रवर्ग्यः । स प्रवृक्तोऽग्निः, रुचितो वायुः, पिन्वितोऽसावादित्यः ॥३॥ यजमानोवै प्रवर्ग्यः । स प्रवृक्त आत्मा, रुचितः प्रजा, पिन्वितः पशवः ॥४॥ अग्निहोत्रं वै प्रवर्ग्यः । स प्रवृक्तोऽधिश्रितं, रुचित उन्नीतम्, पिन्वितोहुतम् ॥ ५ ॥ दर्शपूर्णमासौ वै प्रवर्ग्यः । स प्रवृक्तोऽधिश्रितं, रुचित आसन्नम्, पिन्वितोहुतम ॥ ६ ॥ चातुर्मास्यानि वै प्रवर्ग्यः । स प्रवृक्तोऽधिश्रितं रुचित आसन्नं पिन्वितोहुतम् ॥ ७ ॥ पशुबन्धोवैप्रवर्ग्यः । स प्रवृक्तोऽधिश्रितः, रुचित आसन्नः, पिन्वितोहुतः ॥ ८ ॥ सो मो वै प्रवर्ग्यः । स प्रवृक्तोऽभिषुतः, रुचित उन्नीतः, पिन्वितोहुतः ॥ ९ ॥ न ह वा अस्या प्रवर्ग्येण केन च न यज्ञेनेष्टं भवति य एवमेतद्वेद ॥

॥ इति प्रवर्ग्य यागः ॥

## ॥ इति शिरोयज्ञश्चतुर्थं प्रकरणं समाप्तम् ॥

# ५—अथ यज्ञपरिशिष्टभागः पञ्चमं प्रकरणम् ।



अथातो यज्ञवीर्य्याणामेव मीमांसा भवति । सायं प्रातर्ह वा अमुष्मिँल्लोके अग्निहोत्र हुदश्नाति । त वतीह तस्मिन् यज्ञे ऊर्क् । अर्द्धमासेऽर्द्धं मासे दर्शपूर्णमासयाजी । चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी । षट्सु षट्सु पशुबन्धयाजो संवत्सरे संवत्सरे सोमयाजी । शते शते संवत्सरेष्वग्निचित्—काममश्नाति कामं न । तद्धैतद् यावच्छतं संवत्सरास्तावदमृतमनन्तमपर्यन्तम् ॥ सर्वे हैते यज्ञायोऽयमग्निश्चितः । स यत् पशु-मालभते तदग्न्याधेयम् । अथ यदुखां संभरति तान्यग्न्याधेयहवींषि । अथ यद्दीक्षते तदग्निहोत्रम् । अथ यद्दीक्षितः समिधा वा दधाति–ते अग्निहोत्राहुती । अथ यद्वनी-वाहनं च, भस्मनश्चाभ्यवहरणम् = तौ दर्शपूर्णमासौ । अथ यद्गार्हपत्यं चिनोति तानि चातुर्मास्यानि । अथ यदूर्ध्वं गार्हपत्याद्—आ सर्वौषधात् ता इष्टयः । अथ यदूर्ध्वं सर्वौषधात्, प्राचीन चितिभ्यः = ते पशुबन्धाः । य एवैतेषु यज्ञेषु विष्णुक्रमास्ते विष्णु-क्रमाः । यज्जप्यं तद्वासप्रम् । सौम्योऽध्वरः प्रथमाचितिर्ध्यत्प्राचीनं सर्वेभ्यः राजसूयो द्वितीया । वाजपेयस्तृतीया । अश्वमेधश्चतुर्थी । अग्निसवः पञ्चमी । यैश्चितं सामभिः प रिगायति तन्महाव्रतम् । अथ यत्तत्रोद्गातुः पुरस्ताज्जप्यं तच्छतरुद्रियम् । वसोर्धारा महदुक्थम् । अथ यदूर्ध्वं सामभ्यः प्राचीनं वसोर्धारायै य देव तत्र होतुः पुरस्ताज्जप्यं तत्तत् । अथ यदूर्ध्वं वसोर्धारायै ते गृहमेधाः ॥ एतावन्तो वै सर्वे यज्ञास्तानग्निना-ऽप्नोति ॥ यो ह वा अग्निं चिनुते स एतं वयोविधामात्मानमग्निं विधत्ते ॥ तं वै चतुर्विंशत्याङ्गुलिभिर्म्मिमीते । स चतुरङ्गुलमेवोभयतोऽन्तरत उपसमूहति चतुरङ्गुल-मुभयतो बाह्यतो व्युदूहति । तथा पुच्छस्य । तथोत्तरस्य पक्षस्य । अथ निर्णामौ पक्षयोः करोति अन्तरे वितृतीये । स चतुरङ्गुलमेव पुरस्तादुदूहति चतुरङ्गुलं पश्चादुपसमूहति । स तस्मिन्निर्णामे एकामिष्टकामुपदधाति । अथ वक्रौ पक्षौ करोति । स चतुरङ्गुलमेव पश्चादुदूहति चतुरङ्गुलं पुरस्तादुपसमूहति । अथ रूपमुत्तमं करोति त्रिभिः सहस्रैः ॥ स सहस्रमृज्वालिखिता इष्टकाः करोति स सहस्रमित्यालिखिताः सहस्रमित्यालिखिताः । अथ पञ्चमी चितिनुपधायत्रेधाग्निं विमिमीते । स मध्यमे वितृतीये सहस्रमृज्वालिखिता इष्टका उपदधाति । अथ सहस्रमित्यालिखिता दक्षिणत उपदधाति । अथ सहस्रमित्या लिखिता उत्तरतः उपदधाति ॥

यान् वै सप्तपुरुषानेकं पुरुषमकुर्वन् स प्रजापतिरभवत्। स प्रजाः सृष्ट्वोर्ध्व उदक्रामत्। स एतं लोकमगच्छद् यत्रैष एवतपति। स वै सप्तपुरुषो भवति। तं वा उद्वाहुना पुरुषेण मिमीते। तत्रोपयत् प्रपदेनाभ्युच्छ्रितो भवति तत् परिश्रिद्भिराप्नोति। तस्मादूवाह्यं नैवलेखां परिश्रिद्भ्यः खनेत्। अथ पक्षयोररत्नी उपदधाति। अथ पुच्छे वितस्तिमुपदधाति ॥

या वा इयं वेदिः सप्तविधस्य। एषा वेदेर्मात्रा। स देव यजन मध्यवसाय पूर्वया द्वारा पत्नी शालं प्रपद्य गार्हपत्यायोद्धत्यावोक्षति ॥ गार्हपत्यस्योद्धतात् सप्त प्राचः प्रक्रमान् प्रक्रामति। ततः प्राञ्चं व्यामं विमिमीते। तस्य मध्य आहवनीयायोद्धत्यावोक्षति। पूर्वार्द्धाद्व्यामस्य त्रीन् प्राचः प्रक्रमान् प्रक्रामति सवेद्यन्तः। ते वा एते व्यामैकादशाः प्रक्रमा अन्तरा वेद्यन्तं च गार्हपत्यं च। सैषा वेदेर्योनिः। एतस्यैवै योनेर्देवा वेदिं प्रजानयन् ॥ अथ य एष व्यामः सा गार्हपत्यस्य योनिः। एतस्यै वै योनेर्देवा गार्हपत्यं प्रजानयन्। गार्हपत्यादाहवनीयम्। सवेद्यन्तान् षट्त्रिशत् प्रक्रमां प्राचीं वेदिं विमिभीते त्रिंशतं पश्चात् तिरश्चीं चतुर्विंशतिं पुरस्तात्। तन्नवतिः। सैषानवति प्रक्रमावेदिः। तस्यां सप्त विधमग्निं विदधाति ॥

स यावत्येषा सप्तविधस्य वेदिः तावती चतुर्दश कृत्व एकशतविधस्य वेदिं विमिमीते। अथ षट् त्रिंशत् प्रक्रमां रज्जुं मिमीते। तां सप्तधा समस्यति। तस्यै त्रीन् भागान् प्राच उपदधाति निःसृजति चतुरः ॥ १ ॥ अथ त्रिंशत् प्रक्रमां मिमीते। तां सप्तधा समस्यति। तस्यै त्रीन भागान् पश्चादुपदधाति निःसृजति चतुरः ॥ २ ॥ अथ चतुर्विंशति प्रक्रमां मिमीते। तां सप्तधा समस्यति। तस्यै त्रीन् भागान् पुरस्तादुपदधाति निःसृजति चतुरः ॥ ३ ॥ इति नु वेदिविमानम् ॥

अथाग्नेर्विधाः। अष्टविंशतिः प्राञ्चः पुरुषाः अष्टाविंशतिस्तिर्यञ्चः। स आत्मा। चतुर्दश पुरुषा दक्षिणः पक्षश्चतुर्दशोत्तरः, चतुर्दश पुच्छम्। चतुर्दशारत्नीन् दक्षिणे पक्ष उपदधाति, चतुर्दशोत्तरे, चतुर्दश वितस्तीः पुच्छे इति न्वष्टानवतेः पुरुषाणां मात्रासाधिमानानाम् ॥

अथ त्रिपुरुषां रज्जुं मिमीते। तां सप्तधा समस्यति। तस्यै चतुरो भागानात्मन्नुपदधाति त्रीन् पक्षपुच्छेषु ॥ १ ॥ अथारत्निमात्रीं मिमीते। तां सप्तधा समस्यति। तस्य त्रीन् भागान् दक्षिणे पक्ष उपदधाति, त्रीनेवोत्तरे, निःसृजति चतुरः ॥ २ ॥ अथ वितस्ति मात्रीं मिमीते। तां सप्तधा समस्यति। तस्यै त्रीन् भागान् पुच्छे उपदधाति, निःसृजति चतुरः ॥ ३ ॥ एवमेष एकशतविध एतया वेद्या सम्पद्यते ॥ तदाहुः—यत्

त्रयोदश पुरुषा अतियन्ति कथमेते सम्पदो न च्यवन्ते इति। या वा एतस्य सप्तमस्य पुरुषस्य सम्पत्, सैवैतेषां सर्वेषां सम्पत्॥ तद्धैक एकं विधं प्रथमं विदधति, अथैकोत्तर मा परिमित विधात्, न तथा कुर्य्यात्॥ सप्तविधमेव प्रथमं विदधति, अथैकोत्तरमैकशत विधात्। एकशतविधं तु नाति विदधति॥ य एवैकशतविधः स सप्तविधः। यः सप्तविधः स एकशतविध इति नु विधानाम्॥

अथातश्चयनस्यैव मीमांसा। अन्तरोपसदौ चिनोति। एतदुह यज्ञे तपो यदुपसदः। तद्यत् तपसि चीयते तस्मात् तापश्चितः॥ तद्धै यावदेवोपसद्भिश्चरन्ति तावत् प्रवर्ग्येण। संवत्सरमेवोपसद्भिश्चरन्ति, सवत्सरं प्रवर्ग्येण॥ अथ चतुर्विंशतिः, अथ द्वादश, अथ षट्, अथ तिस्रः॥

अथातश्चिति पुरीषाणामेव मीमांसा। मास प्रथमा चितिर्मासं पुरीषम्। मासं द्वितीया मासं पुरीषम्। मासं तृतीया मासं पुरीषम्। मासं चतुर्थी मासं पुरीषम्। अथ पञ्चम्यै चिते रसपत्ना विराजश्च प्रथमाहमुपदधाति स्तोमभागा एकैकामन्वहं ताः सकृद् सादयति सकृत् सूदद्दोहसाऽधिवदति तूष्णीं मासं स्तोमभागा पुरीषमभिहरन्ति। मासं षष्ठी मासं पुरीषम्॥ अथ त्रीण्यहान्युपातियन्ति यदहः शतरुद्रियं जुहोति। यदहरुपवसथो यदहः प्रसुतः। तद् यत् तेष्वहः सूपसदाचरन्ति तानि तस्य मासस्याहोरात्राण्यथ यत् प्रवर्ग्येण तदुतस्मिन्नृतावादित्यं प्रतिष्ठापयन्ति। स संवत्सरं प्रसुतः स्यात् यदि संवत्सरं न शक्नुयाद् विश्वजिता सर्वपृष्ठेनाति रात्रेण यजेत तस्मिन् सर्ववेदसं दद्यात्॥

अथ यजुष्मत्यः—दर्भस्तम्बो[१], लोगेष्टकाः[४], पुष्करपर्णं[१], रुक्मपुरुषौ[२], स्रुचौ[२], स्वयमातृण्णा[१], दूर्वेष्टिका[१], द्वियजू[१], रेतःसिचौ[२], विश्वज्योतिः[१], ऋतव्ये[२], आषाढा[१], कूर्मं[१], उलूखलमुशले[२], उखा[१], पञ्चपशुशीर्षाणि[१], पञ्चदशापस्याः[१५], पञ्चछन्दस्याः[५], पञ्चाशत प्राणभृतः[५०]—ता द्वाभ्यां न शतं प्रथमा चितिः॥ १॥ पञ्चाश्विन्यो[५], द्वे ऋतव्ये[२], पञ्चवैश्वदेव्यः[५], पञ्चप्राणभृतः[५], पञ्चापस्याः[५], एकयानविंशतिर्वपस्याः[१९]—ता एकचत्वारिंशद् द्वितीयाचितिः॥ २॥ स्वयमातृण्णा, पञ्चदिश्याः, विश्वज्योतिः, चतस्र ऋतव्याः, दशप्राणभृतः, षट्त्रिंशच्छन्दस्याः, चतुर्दश वालखिल्याः,—ता एकसप्ततिस्तृतीया चितिः॥३॥ अष्टादश प्रथमाः[१८], अथ द्वादश[१२], अथ सप्तदश[१७]—ताः सप्तचत्वारिंश चतुर्थी चितिः॥ ४॥ पञ्चासपत्नाः[५], चत्वारिंशद्विराजः[४०], एकयानत्रिंशत् स्तोमभागाः[२९], पञ्चनाकसदः[५], पञ्च पञ्चचूडाः[५], एकत्रिंशच्छन्दस्याः[३१], अष्टौ गार्हपत्या चितिः[८], अष्टौ पुनश्चितिः[८], ऋतव्ये[२], विश्वज्योतिः[१], विकर्णी[१] च स्वय-

मातृएणा[१] चाश्मा पृश्निः यश्चितेऽग्निर्निधीयते[१]—ता अष्टात्रिंशं शतं पञ्चमी चितिः ॥ ५ ॥ ताः सर्वाः पञ्चभिर्न चत्वरिंशतानि[३६५] ॥ अथ या लोकम्पृणाः, ता दश च सहस्राण्यष्टौ च शतानि[१०८००] भवन्ति । ता सामेकविंशतिं गार्हपत्ये उपदधाति, द्वाभ्यां नाशीतिं धिष्ण्येषु, आहवनीय इतराः ॥ तद्धैके आहवनीय एवैतां सम्पद-मापिपयिषन्ति । न तथा कुर्य्यात् । दश वा एतानग्नींश्चिनुते—अष्टौ धिष्ण्यान् आ-हवनीयं च गार्हपत्यं च । ये नैव निर्ऋतिं पाप्मानमपहते स एकादशः ॥ तांन्नु सर्वानेकमिवैवाचक्षते—अग्निरिति । एतस्य ह्येवैतानि सर्वाणि रूपाणि ॥ यथा संवत्सरस्याहोरात्राण्यर्धमासा मासा ऋतवः, एवमस्यैतानि सर्वाणि रूपाणि । ते ये ह तथा कुर्वन्ति,—एतानि हास्य ते रुपाणि बहिर्धा कुर्वन्ति—अथो पापवस्यसं कुर्वन्ति ॥

---

१—पशुबन्धः ।

पशुबन्धेन यजते गृहेषु सुयवसे । तं वै संवत्सरो नानीज न मतीयात् ॥ हविर्यज्ञ विधो ह वा अन्यः पशुबन्धः सर्व विधोऽन्यः । स हैष हविर्यज्ञविधो यस्मिन् व्रतमुपनयति अपः प्रणयति पूर्णपात्रं निनयति, विष्णुक्रमान् क्रमयति ॥ अथ हैष सव विधो यस्मि-न्वैतानि न क्रियन्ते ॥

तदाहुः—इष्टिः पशुबन्धा ३ महायज्ञा ३ इति ॥ महायज्ञ इति ह ब्रूयात । तस्य प्रयाजा एव प्रातः सवनं, अनुयाजास्तृतीय सवनम्, पुरोडाश एव माध्यन्दिनं सवनम । तद्धैके वपायां हुतायां दक्षिणा नयन्ति, तदु तथा न कुर्य्यात् ॥ पुरोडाशेडायामेवोप-हूतायां दक्षिणा नयेत् ॥

तदाहुः—अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते । क्वैनमदि दीक्ष इति । अवभृथादनूदृद् हेयुः—अध्वर्य्युश्च, प्रतिप्रस्थाता च, होता च मैत्रावरुणश्च, ब्रह्मा चाग्नीध्रश्च । एतैर्वा एष षड्ढोता । तमनुद्रुत्य षड्ढोतारं जुहोत्येकामाहुतिं कृत्वा । सैव दीक्षा ॥ तदाहुः—अध्वर्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमवभृथ मवनेष्य-सीति । स यद्हृदयशूलेन चरन्ति, स हैवैतस्यावभृथः ॥

मधुको हस्माह पैङ्क्यः—विसोमेन वा एके पशुबन्धेन यजन्ते ससोमेनैके ॥ स हैष विसोमेन यजते योऽन्यं पालाशाद् यूपं कुरुते । अथ हैष ससोमेन, यः पालाशं यूपं कुरुते । पालाशमेव यूपं कुर्वीत ॥ स य एष बहुसार स्तादृशं पशुकामो यूपं न कुर्वीत । अथ यः फल्गुप्रासहः तादृशं पशुकामो यूपं कुर्वीत ॥ अथ यस्यैत्तद्धक्रस्य

सतः शूल इवाग्रं भवति सह कपोती नाम। तादृशमायुः कामो यूपं न कुर्वीत ॥ अथ य एष आनत उपरिष्टाद्, उपनतो मध्ये, यो ह तादृशं यूपं कुरुते ऽशनायुका ह्यस्य भार्य्या भवन्ती ॥ तादृशमन्नाद्य कामो यूपं न कुर्वीत ॥ अथ य एष आनत उपरिष्टादुपनतो मध्ये तादृशा मन्नाद्य कामो यूपं कुर्वीत ॥ स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवति, अथ योऽत उर्ध्वः सौम्यस्यैव सोऽध्वरस्य ॥

तदाहुः यद्देदाज्यभागौ ना[3] इति ॥ यजे दित्याहुः ॥ ऽऽपशुं संज्ञप्तं ब्रूयात्—शेतां नु मुहूर्तमिति ॥

एतद्वै पशोः संज्ञप्यमानस्य हृदयं शुक् समवैति, हृदयाच्छूलम्। तद्यत् सह हृदयेन पशुं श्रपयन्ति पुनः पशुं शुगनु विष्पन्देत, पार्श्वत एवैनत्काष्ठे प्रवृह्य श्रपयेत ॥

उपस्तृणीत आज्यम्[1]। हिरण्यशकल मवदधाति[2]। वपामवदधाति[3]। हिरण्यशकल मवदधाति[4]। अथोपरिष्टादभिधारयति[5]। सा वा एषा पञ्चावत्तावपा भवति ॥ प्रहार्य्येऽग्नौ पशुबन्धेन यजेत ॥

---

१—गवामयनम्।

अथ संवत्सराय दीक्षन्ते। तेषां गृहपतिः प्रथमो दीक्षते[1]। अथ ब्रह्माणं दीक्षयति[2]। अथोद्गातारम्[3], अथ होतारम्[4]। एतांश्चतुरोऽध्वर्य्युर्दीक्षयति ॥ १ ॥ अथाध्वर्य्युं प्रतिप्रस्थाता दीक्षयति। अथ ब्रह्मणे ब्राह्मणाच्छंसिनम्[2]। अथोद्गात्रे प्रस्तोतारम्[3]। अथ होत्रे मैत्रावरुणम्[4]। एतांश्चतुरः प्रतिप्रस्थाता दीक्षयति ॥ २ ॥ अथाध्वर्य्यवे प्रतिप्रस्थातारं नेष्टा दीक्षयति[1]। एतेषां वै नवानां क्लृप्तिमन्वित्तरे कल्पन्ते ॥ अथ ब्रह्मणेपोत्तारं दीक्षयति[2]। अथोद्गात्रे प्रतहर्तारम्[3]। अथ होत्रेऽच्छावाकम्[4]। एतांश्चतुरो नेष्टा दीक्षयति ॥ ३ ॥ अथाध्वर्य्यवे नेष्टारमुन्नेता दीक्षयति[1]। अथ ब्रह्मणे आग्नीध्रम[2]। अथोद्गात्रे सुब्रह्मण्याम्[3]। अथ होत्रे ग्रावस्तुतम्[4]। एतांश्चतुर उन्नेता दीक्षयति ॥ ४ ॥ अथोन्नेतारं स्नातको वा ब्रह्मचारी वाऽन्यो वा दीक्षितो दीक्षयति। न पूतः पावयेदिति ह्याहुः। सैषाऽनुपूर्वदीक्षा ॥

दीक्षा, प्रायणीयम् क्रयः, आतिथ्यम् प्रवर्ग्यः, उपसदः, उपवसथः इति ॥ १ ॥ प्रायणीयमतिरात्रम्[1]। चतुर्विंशमहः[2]। अभिप्लवः षडहः। पृष्ठ्यः षडहः। अभिजित्।

स्वरसामानः । विषुवान् । स्वरसामानः । विश्वजित् । पृष्ठ्यः षडहः । अभिप्लवः षडहः । गो आयुषी । दशरात्रम् । दशरात्रिकः पृष्ठ्यः षडहः । छन्दोमाः ॥ दशममहः । महाव्रतम् । उदयनीयमतिरात्रम् ॥ २ ॥ स एष संवत्सरस्त्रिमहाव्रतः । चतुर्विंशे महाव्रतं, विषुवति महाव्रतं, महाव्रत एव महाव्रतम् ॥

पृष्ठ्याभिप्लवौ तन्त्रे कुर्वीत—इति ह स्माह पैङ्ग्यः ॥ तयोः स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति । न अग्निष्टोमा मासि सम्पद्यन्ते, एकविंशतिरुक्थ्याः ॥ चतुस्त्रिंशदग्निष्टोमा मासि सम्पद्यन्ते, एक उक्थ्यः षोडशिमान् ॥

---

### ३—तापश्चितः ।

देवा ह वै सहस्र संवत्सराय दिदीक्षिरे । को हि तस्मै मनुष्यो यः सहस्र संवत्सरेण समाप्नुयादिति । ते ह देवा ऊचुः—उप तं यज्ञक्रतुं जानीत यः सहस्र संवत्सरस्य प्रतिमा । ते [४]विश्वजितमेव सर्वपृष्ठं पृष्ठ्यस्य षडहस्याञ्जः समपश्यन् । पृष्ठ्यमेव षडहं द्वादशाहस्य । [३]द्वादशाहमेव संवत्सरस्य । [२] संवत्सरमेव तापश्चितस्य । [१]तापश्चितमेव सहस्र संवत्सरस्य ॥ स वै संवत्सरं दीक्षाभिरेति, संवत्सरमुपसद्भिः, संवत्सरं सुत्याभिः ॥ तद्वा एतत् त्रयं सह क्रियते—अग्नि, रक्यँ, महदुक्थम् । दीक्षोपसद्भ्यामग्न्यर्क्यौ वाप्तौ भवतोऽथ सुत्याभिर्महदुक्थम् । स वा एष एव सहस्र संवत्सरस्य प्रतिमा यत्तापश्चितः ॥

---

### ४—सौत्रामणी ।

सोमेनेष्ट्वा सौत्रामण्या यजते । स एतमाश्विनं धूम्रमालभेत, सारस्वतं मेषम्, ऐन्द्रमृषभम् । आश्विनीरजाः, सारस्वतीरवीः, ऐन्द्रीर्गाव इत्याहुः । वाडवाऽनुशिशुर्भवति । वृकलोमानि भवन्ति, व्याघ्रलोमानि, सिंहलोमानि ॥ व्रीहयश्च श्यामाकाश्च भवन्ति गोधूमाश्च कुवलानि चोपवाकाश्च बदराणि च यवाश्च कर्कन्धूनि शष्पाणि च तोक्मानि च ॥ सीसेन शष्पाणि क्रीणाति, ऊर्णाभिस्तोक्मानि, सूत्रैर्व्रीहीन् ॥ तद्धै तदन्येऽध्वर्य्यवः सीसेन क्लीबाच्छष्पाणि क्रीणन्ति । न वा एषस्त्री न पुमान् यत् क्लीबः । नेष्टिर्न पशुबन्धः सौत्रामणीति वदन्तः । तदु तथा न कुर्य्यात् । उभयं वै सौत्रामणी – इष्टिश्च पशुबन्धश्च । व्यृद्धमुवा एतन्मनुष्येषु यत् क्लीबः । यज्ञमुख एव

ते यज्ञस्य व्यृद्धिं दधति ये तथा कुर्वन्ति । सोमविक्रयिण एव क्रीणीयात् ॥ शता तृण्णा कुम्भी भवति । स तं भवति । चर्म्यं भवति । पवित्रं भवति बालो भवति । सुवर्णं हिरण्यं भवति, शतमानं भवति । आश्वत्थं पात्रं भवति । औदुम्बरं नैयग्रोधम् । स्थाल्यो भवन्ति । पालाशान्युपशयानि भवन्ति । अपाष्ठिहस्य पत्रे भवतः । षट् त्रिंशदेतानि भवन्ति । ऐन्द्रः पुरोडाशान्तं प्रथमः । सावित्रः पुरोडाशो भवति । वारुणोऽन्त्यो भवन्ति एकादशकपाल ऐन्द्रो भवति ॥ द्वादशकपालः सावित्रः । दशकपालो वारुणः ॥ मध्यतः एतैः पुरोडाशैः प्रचरति ॥ वडवाऽनुशिशुर्दक्षिणा भवति ॥

सुत्यायै तिस्रो रात्रीर्वसति । द्वे वेदी भवतः—उत्तरान्या भवति दक्षिणान्या । पयश्च सुरा च भवतः । पूर्वे पयोग्रहा गृह्यन्तेऽपरे सुराग्रहाः । पयोग्रहानेकधा गृह्णाति ! नाना सुराग्रहान् गृह्णाति अध्वर्युश्च प्रतिप्रस्थाता च जघनेन वेदिं प्राञ्चमावृत्त यजमानं श्येन यत्राभ्यामूर्ध्वं चावाञ्चं च पावयतः ॥ पयोग्रहान् संमृशति ॥

उत्तरेऽग्नौ पयोग्रहान् जुह्वति हुत्वा भक्षयन्ति । दक्षिणेऽग्नौ सुराग्रहान् जुह्वति । हुत्वा भक्षयन्ति । दक्षिणस्यैवाग्नेस्त्रीनङ्गारान्निर्वर्त्य बहिः परिधि तदेताभि-र्व्याहृतिभिर्जुहुयात्—पितृभ्यः स्वधायिभ्यः स्वधा नमः ॥ १ ॥ पिता महेभ्यः स्वधायिभ्यः स्वधा नमः ॥ २ ॥ प्रपिता महेभ्यः स्वधायिभ्यः स्वधा नमः" ३ इति । अप आनीय निनयति । त्रिभिः पवित्रैः तिसृभिस्तिसृभिः पावमानीभिः पावयन्ति नवभिः ॥ पवित्रेण पावयन्ति, वालेन पावयन्ति, हिरण्येन पावयन्ति, सुरया पावयन्ति ॥

तदाहुः याजयितव्यं सौत्रमण्या³ न याजयितव्या³म्—इति । तदुहस्माह-रेवोत्तरास्थपतिः पाटवश्चाक्रमः—अपि प्रदानं प्रदाय याजयितव्यमेवेति ॥ पितृलोकं वा एतेऽन्ववपन्ति ये दक्षिणेऽग्नौ चरन्ति । आज्याहुतिं जुहोति ॥१॥ सर्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्ति । आज्याहुतिंजुहोति॥२॥अथ पयः समन्वारब्धेषु जुहोति॥३॥ एकाकीहुतोच्छिष्टं भक्षयति हिरण्येन मार्जयन्ते ॥ आश्विनेन पयसा प्रथमा रात्रिं परिषिञ्चति । सारस्वतेन पयसा द्वितीयां रात्रिम् । ऐन्द्रेण पयसा तृतीया रात्रिम् ॥ एकस्यै दुग्धेन प्रथमां रात्रि परिषिञ्चति । द्वयोर्दुग्धेन द्वितीयां, तिसृणां दुग्धेन तृतीयाम् ॥ सर्वे पयस्वन्तो भवन्ति, सर्वे सोमवन्तः, सर्वे परिस्रुन्मन्तः, सर्वे घृतवन्तः, सर्वे मधुवन्तः ॥ सर्वे आश्विना भवन्ति, सर्वे सारस्वताः, सर्वे ऐन्द्राः ॥ सन्तता याज्या-पुरोऽनुवाक्या भवन्ति समान देवत्याः सर्वा आश्विन्यो भवन्ति, सर्वाः सारस्वत्यः सर्वा ऐन्द्र्यः ॥ अनुष्टुभः आप्रियो भवन्ति सर्वा आश्विन्यः, सर्वा सारस्वत्यः, सर्वाऐन्द्र्यः ॥ जागता अनुशैषा भवन्ति सर्वं आश्विनाः, सर्वे सारस्वताः, सर्वे ऐन्द्राः ॥ स वा एष

प्रत्यक्षात् सोमयज्ञ एव यत् सौत्रामणी। तं यद्येकाकीयजमानो भक्षयेद्-इष्टिर्वैवस्यात् पशुबन्धो वा। सर्वऋत्विजो भक्षयन्ति, त्रय आश्विनमध्वर्य्यवो भक्षयन्ति,अध्वर्युः प्रति प्रस्थाता, आग्नीध्रे इति॥ त्रयः सारस्वतः-होता ब्रह्मा मैत्रा वरुणः। एकाकी ऐन्द्रं यजमानः षडऋत्विजो भक्षयन्ति द्वादश भक्षा भवन्ति त्रयोदशं यजमानो भक्षयति॥ त्रयः पशवः आश्विनः सारस्वतऐन्द्रः॥ त्रयः पुरोडाशाः-ऐन्द्रः सावित्रो वारुणः। षड्ग्रहा— आश्विनौ सारस्वतावैन्द्रो। सर्वेषां ग्रहाणां द्वे याज्या पुराऽनुवाक्ये। सर्वाः पुरोऽनुवाक्याः सर्वायाज्याः। सर्वेपराञ्चः सर्वे प्रत्यञ्चः। सर्वाः प्रथमाः सर्वा मध्यमाः सर्वा उत्तमाः॥

कृष्णाजिनेऽभिषिञ्चति लोमतः। आसन्द्यामभिषिञ्चति। औदुम्बरी भवति जानुसंमिता परिमिता तिरश्ची। मुञ्जविवयना॥ द्वा उत्तरस्यां वेद्यां पादौ भवतो द्वौ दक्षिणस्याम्॥ स आसन्दीमास्तृणाति। अथैनां कृष्णाजिने नास्तृणाति। अथाधिरोहति। अथ सुवर्णरजतौ रुक्मौ व्युपास्यति। पशूनां वसयाभिषिञ्चति। शफग्रहा भवन्ति। त्रयस्त्रिंशद्ग्रहा भवन्ति। षोडशभिरृग्भिर्जगतीभिर्जुहोति॥ वैतसः सतो भवति। सर्वं सुरभ्युन्मन्दनं भवति॥ पुरस्तात् प्रत्यङ्ङभिषिञ्चति शीर्षतः। आमुखादन्ववस्रावयति सर्वतः परिक्रामम्॥ अश्विनेन प्रथमेन यजुषाऽभिषिञ्चति, अथ सारस्वतेन अथैन्द्रेण। पुरस्तात् स्विष्ट कृतोऽभिषिञ्चति॥ अन्तरा वनस्पतिं च स्विष्ट कृतं चाभिषिञ्चति। अथैन जानुमात्रे धारयन्ति, अथ नाभिमात्रे, अथ मुखमात्रे॥ अथ संशानं नाम चतुर्निधनं साम गायति बृहत्यामैन्द्याम्॥ प्रथमा द्वितीयैः, द्वितीयास्तृतीयैः तृतीयाः सत्येन, सत्यं यज्ञेन, यज्ञोयजुर्भिः यजूंषि सामभिः, सामान्यृग्भिः ऋचः पुरोऽनुवाक्याभिः, पुरोऽनुवाक्या याज्याभिः याज्यावषट्कारैः वषट्कारा आहुतिभिः आहुतयो मे कामान समर्द्धयन्तु-भूः स्वाहा-इति। तदेनमेताभिर्देवताभिः परोऽवरमभिषिच्याथास्मा आहुतिभिः सर्वान् कामान् समर्द्धयति। अथर्त्विक्षूपहवमिष्ट्वा भक्षयति॥

अवभृथमिष्टायन्ति। अनपेक्षमेत्याहवनीयमुपतिष्ठते। समिधमाधत्ते। आहवनीये समिधमभ्यादधाति। आदित्यं चरुं यक्ष्यमाणो निर्वपति। धेनुर्दक्षिणा। वत्सं पूर्वस्यां ददाति मातरमुत्तरस्याम्। यदावैवत्सोमातरं धयति—अथ सा प्रत्ता (अवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजते)॥ एष ब्राह्मण यज्ञ एव यत् सौत्रामणी।

॥ इति सौत्रामणी॥

———

प्रजापतिः प्रथमा चितिः । इमे वै लोका दिशश्च प्रजापतिः ( कां० ६ अ० ३ कं० ११ ) प्राणः प्रजापतिः । ६ ।

देवा द्वितीया

इन्द्राग्नी च विश्वकर्मा च तृतीया

ऋषय श्चतुर्थी

परमेष्ठी पञ्चमी

---

इयं ह्येवैत द्रूपं—कृष्णाजिनं च पुष्करपर्णं च । ६ । योनिर्वै पुष्कर पर्णम् । वाक् पुष्कर पर्णम् । आपो वै द्यौः । आपः पुष्कर पर्णम् । द्यौः पुष्कर पर्णम् । उत्तरोवा असा वस्यै ॥ इयं वै कृष्णाजिनम् यज्ञो वै कृष्णाजिनम् । इय मुवै यज्ञः । ( कां ६ । प्र ३ । ब्रा २ । कं ७—१२ ) ( पृ० ३३८ ) ॥

---

वाङ्मयः प्राणमयो मनोमय आत्मा । मनस्त्रि विधम् ॥ ब्रह्मणस्पति[1] सोमजं चन्द्र[2] सोमजं दिक्[3] सोमजं चेति । सर्वेन्द्रियं प्रज्ञानम् । इन्द्रियं मनो वेनीयम् । श्रोत्रम् । अन्न सोमजं हृदयं सर्वेन्द्रियं प्रज्ञानमनिन्द्रियम् । दिक् सोमजमिन्द्रियं बहिर्मनः श्रोत्रम् । चन्द्र सोमजं सुख दुःख वेदनीयमिन्द्रियमनः । अन्तर्मनः ॥

| हृदय | वाक् प्राणः चक्षुः | श्रोत्रम् |
|---|---|---|
| अन्न सोमः | वागग्निः प्राणाग्निः अन्नादाग्निः | दिक् सोमः |

प्रज्ञा ………………………………… प्रज्ञा = प्राणः प्रज्ञात्मा । या वै प्रज्ञा सप्राणः । यः
प्राणः प्राणः प्राणः……… प्राणः सा प्रज्ञा । सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः ॥

१ मनः—सर्वेन्द्रियं प्रज्ञानम् हृदयम् अतिन्द्रियं अन्नसोमजम् ।

२ मनः—अन्तर्मनः सुख दुःख वेदनीयम् इन्द्रियम् चन्द्रसोमजम् ।

३ मनः—वहिर्मनः वेदनीयम् श्रोत्रम् इन्द्रियम दिक् सोमजम् ।

---

कृष्णाजिने मर्त्याग्नौ—

१ ब्रह्मा—अमृताग्निः अग्निः

२ पद्मम्—मर्त्याग्निः अग्निः

पुष्करपर्णे अमृताग्नौ—

३ विष्णुः—सोमः आपः

४ वायुः — वायुः आपः

५ भागवतम्—आपः आपः

६ नारदः — वाक् वाक्

अमृताग्नौ पञ्चचितयोऽग्नीनाम्

१—प्रजापतिः

१ देवाः पृ०

२ इन्द्राग्निविश्वकर्माणः अं०

३ ऋषयः द्यौः०

४ परमेष्ठ्यापः आ०

पृ० अं० द्यु० आ०

७ मार्कण्डेयः—त्रगुण्य प्रकृतिः

८ अग्निः—मर्त्यः अग्निः

९ भविष्यम्—सूर्य्यः संवत्सरः

१० ब्रह्मविवर्तः—भ्रमः

११ लिङ्गः—मर्त्याग्निः

१२ वराहः—एमूषवराहवायुः

१३ वामनः—त्रिविक्रम विष्णु सूर्य्यः

१४ स्कन्दः—कुमाराग्निः

१५ कूर्मः—कश्यपः पश्यकः दधिघृतम्

१६ मत्स्यः—

१७ गरुडः—

१८ ब्रह्माण्डम्—




| | | | |
|---|---|---|---|
| १ कृष्णाजिने द्वौ भागौ<br>अन्तरमृताग्निः प्राणो<br>ब्रह्मा १ | ब्रह्म | प्रजापतिरग्निः प्रथमा | चितिः |
| | | अग्निः १ देवा द्वितीया | ,, |
| | | वायुः २ इन्द्राग्नी विश्वकर्मा च | ,, |
| २ कृष्णाजिने—<br>मर्त्याग्निः भूतधातवः<br>पद्मम् २ | पद्मम् | प्राणः ३ ऋषयश्चतुर्थी | ,, |
| | | आपः ४ परनेष्ठी पञ्चमी | ,, |
| पुष्करपर्णे चत्वारः | | मनः आनन्दः विज्ञान मनः | |
| १ सोममय्य आपोऽन्तरिक्षम् | विष्णुः १ | प्राणः ... ... ... | |
| २ वायुमय्य आपोऽन्तरिक्षम् | वायुः २ | वाक् वाक् अग्निः अग्निः | |
| ३ गोमय्य आपोऽन्तरिक्षम् | भागवतम् ३ | तेजः आपः अग्निः | |
| पुष्करपर्णे— | | विद्युत् वायुः वायुः | |
| १ ऋषिप्राणमयी वाक्प्रतिष्ठा | नारद ४ | शब्द आकाशः सोमः आदित्यः | |

यज्ञः कृष्णाजिनम्

## ५—अथ उखा संभरणम् ( चयनम् )



(१) स उपरिष्टात् फाल्गुन्या अष्टकायामुखां संभरति ॥

(२) स एतामष्टा गृहीतामाहुति मूर्ध्वामुद्गृह्णन्नष्टाभिर्यजुर्भिः संततां जुहोति। स्रुवश्चात्र स्रुक् च प्रयुज्येते। एतस्यामाहुत्यां हुतायां पशुविभिरग्निः स्वायरूपायाविर्भवति। अनड्वापुरुषः, अथाश्वः, अथ रासभः. अथाजः इति। एष वा अनड्वापुरुषो यो न देवा नवति न पितॄन् न मनुष्यान्। त्रयस्ते मौञ्जीभि रभिधानाभि रभिहिता भवन्ति। त्रिवृतोऽश्वाभिधानी कृता भवन्ति॥ ते प्राञ्चस्तिष्ठन्ति। अश्वः प्रथमोऽथ रासभोऽथाजः। ते दक्षिणतस्तिष्ठन्ति। दक्षिणत आहवनीयो भवति–उत्तरत एषाभिरुपशेतेऽरत्निमात्रे। सा वैष्णवी स्यात् ता हैके हिरण्मयीं कुर्वन्ति। तदु तथा न कुर्य्यात्। कल्माषी स्यात्। यदि कल्माषीं न विन्देद्—अथ कल्माषी स्यात्। सुषिरातु स्यात्। प्रादेशमात्री, अरत्निमात्री त्वेव भवति। अन्यतः क्ष्णुत् स्यात्। उभयतः क्ष्णुत् त्वेव भवति। तामादत्ते। हस्त एषाभ्रिर्भवति—अथ पशूनभिमन्त्रयते। सोऽश्वमभिमन्त्रयते—"प्रतूर्तं वाजिन्ना द्रव वरिष्ठमनु संवतम्। दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित्"–इति॥ अथ रासभम्—"युञ्जाथां रासभं युवमस्मिन् यामे वृषण्वसू। अग्निं भरन्तमस्मयुम्"–इति॥ अथाजम्—"योगे योगे तवस्तरं वाजेवाजे हवामहे। सखाय इन्द्रमूतये"–इति॥ अथैतान् प्राच उत्क्रमयति। नोपस्पृशति। सोऽश्वमुत्क्रामयति, अथ रासभम्, अथाजम्।

(३) प्रदीप्ता एतेऽग्नयो भवन्ति। अथ मृदमच्छयन्ति। प्राञ्चोयन्ति। अथानड्वापमीक्षते। अथ वल्मीकवपा सुषिरावध्वे निहिता भवति। तामन्वीक्षते। तं यदा पश्यन्ति–अथ ताम वास्यति–आगच्छन्ति मृदम्। अथाश्वमभिमन्त्रयते—"आक्रम्य वाजिन्‌पृथिवीमग्निमिच्छ रुचा त्वम्"... वाज्यध्वानं सर्वामृधो विधूनुते। अग्निं सधस्थे महति चक्षुषानिचिकीषे"–इति॥ ...नमाक्रमयति। अथैनमुन्मृशति। नोपस्पृशति। अथैनमुत्क्रमयति। अथैनमुत्क्रान्तमभिमन्त्रयते—"उदक्रमीद् द्रविणोदावाज्यर्वाऽकः सुलोकं सुकृतं पृथिव्याम्। ततः ...म सुप्रतीकमग्निं स्वोरुहाणा अधिनाकमुत्तमम्"–इति॥ तं दक्षिणतोऽपसंक्रमयति। ...तरौ पशू भवतः। ते दक्षिणतः प्राञ्चस्तिष्ठन्ति। अथोपविश्य मृद् मभि जुहोति। अश्वस्य पदे जुहोति। द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्यां व्यतिशक्ताभ्यां द्वे आहुती

जुहोति। आज्येन स्रुवेण स्वाहाकारेण जुहोति। अथैनं परिलिखति त्रिष्कृत्वः सर्वतः परिवतीभिराग्नेयीभिस्तिसृभिः। स वै वर्षीयसा वर्षीयसाच्छन्दसा परां परां लेखां वरीयसीं करोति। अथैनमस्यां खनति द्वाभ्याम्। स वै खनामि खनाम इति खनति। सा समं विलाग्यात्। चतुः स्रक्तिरेष कूपो भवति॥ अथैनं कृष्णाजिने सम्भरति॥ लोमतः। तत् तूष्णीमुपस्तृणाति। प्राचीनग्रीवे। अथैनं पुष्करपर्णे सम्भरति। तन्मन्त्रेणोपस्तृणाति। तदुत्तरं कृष्णाजिनादुपस्तृणाति। अथैने अभि मृशति द्वाभ्याम्॥ अथ मृत्पिण्डमभि मृशति। अथैनं परिगृह्णाति। अभ्या च दक्षिणतो हस्तेन च। हस्तेनैवोत्तरतः। गायत्रीभिस्तिसृभिः। अथ द्वाभ्यामाग्नेयीभ्यां त्रिष्टुब्भ्याम्॥ अथैका बृहत्युत्तमा भवति! ताः षट् संपद्यन्ते। तं दक्षिणत उदञ्चमविच्छेद् माहरति। अथ तत्राप उपनिनयति। अथैनां वायुना संदधाति। अथैनां दिग्भिः संदधाति। स इमां चेमां च दिशौ संदधाति अथे मां चेमां च॥ अथ कृष्णाजिनं च पुष्करपर्णं च समुद्गृह्णाति। अथै न मुपनह्यति योक्त्रेण मौञ्जेन त्रिवृता॥ तत् पर्यस्यति। अथै न मादायोत्तिष्ठति। अथै न मित उर्ध्वं प्राञ्चं प्रगृह्णाति। परावाहु प्रगृह्णाति। अथैन मुपाऽवहरति। तमुपावहृत्योपरिनाभि धारयति॥ हस्त एष भवति–अथ पशूनभि मन्त्रयते। सोऽश्वमभिमन्त्रयते–"सजातो गर्भो असि रोदस्यो रग्ने चारुर्विभृत ओषधीषु। चित्रः शिशुः परितमास्यक्तून प्रमातृभ्यो अधिकनिक्रदद्गाः"–इति। अथ रासभम्–"स्थिरोभव वीड्वङ्ग आशुर्भव वाज्यर्वन्। पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः–" इति। अथाजम्–"शिवा भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः। मा द्यावापृथिवी अभिशोचमाऽन्तरिक्षं मावनस्पतीन्–", इति। अथैन मेतेषां पशूनामुपरिष्टात् प्रगृह्णाति। नोपस्पृशति। तमश्वस्योपरिष्टात् प्रगृह्णाति। अथ रासभस्य। अथापादत्ते। अथाजस्य। अथैतान् पशूनावर्तयन्ति। तेषामजः प्रथम एति, अथ रासभः अथाश्वः। अथै तो यतामश्वः प्रथम एति अथ रासभः अथाजः। अथानद्धा पुरुषमीक्ष्यते। तमजस्योपरिष्टात् प्रगृह्णन्नेति। अथै न मुपावहरति द्वाभ्याम्॥ तं दक्षिणत उदञ्चमुपावहरति। उद्धतमवोक्षितं भवति यत्रैनमुपावाहरन्ति। उद्धते वा अवोक्षितेऽग्नि मादधाति। सिकता उपकीर्णा भवन्ति। परिश्रितं भवति। अथैनं विष्पति। अथाजलोमान्याच्छिद्य उदीचः प्राचः पशून् प्रसृजति। पर्णकषाय निष्पक्का एता आपो भवन्ति। ता उपसृजति त्रिभिः। अथ फेनं जनयित्वाऽन्ववदधाति। अथाजलोमैः संसृजति। अथै तत् त्रयं पिष्टं भवति। शर्कराऽश्माऽयोरसः तेन संसृजति द्वाभ्याम्। अथ प्रयौति त्रिभिः।

(४) अथ मृत्पिण्डमपादत्ते यावन्तं निधयेऽलंमन्यते। तं प्रथयति। तां प्रादेशमात्रीं कृत्वाऽथास्यै सर्वतस्तीरमुन्नयति। अथ पूर्वमुद्धिमादधाति। ता संलिप्य संश्लक्ष्ण्य—अथोत्तरमुद्धिमादधाति। अथान्तरतश्च बाह्यतश्च करोति। तां प्रादेशमात्रीमेवोर्ध्वां

करोति। प्रादेशमात्रीं तिरश्चीम् । सा यदि वर्षीयसी प्रादेशात् स्याद्—ह्रसीयसीं कुर्य्यात् । यदि ह्रसीयसीवर्षीयसीम् ॥ स यद्येकः पशुः स्याद्-एक प्रादेशां कुर्य्यात् । अथ यदि पञ्चपशवः स्युः—पञ्च प्रादेशां कुर्य्यात्, इषुमात्रीं वा । पञ्चप्रादेशा ह स्म त्वेव पुरेषुर्भवति ॥ अथ तिरश्चीं रास्नां पर्य्यस्यति । तामुत्तरे तृतीये पर्य्यस्यति । अथ चतस्र ऊर्ध्वाः करोति तूष्णीमेव । ता एता एतस्यै भवन्ति । यदत ऊर्ध्वं तदेतया तिरश्च्याद्दढम् । अथ यदतोऽर्वाक् तदेताभिः । तासामग्रेषुस्तनानुन्नयन्ति । सैषा गौरेव, तस्या एतदूधो यैषा तिरश्चीरास्ना । सा वितृतीये भवति । तस्यैस्तनानुन्नयति । सा चतुः स्तना भवति, तां हैके द्विस्तनां कुर्वन्ति । अथो अष्टस्तनाम् । न तथा कुर्य्यात् । अथास्यै बिलमभि पद्यते । तां परिगृह्य निदधाति ॥ ता हैके तिस्रः कुर्वन्ति । यदि तरा भेत्स्यते, ऽथेतरस्यां भरिष्यामो, यदीतराऽथेतरस्याम्—इति । न तथा कुर्य्यात् । यदु-भिन्नायै प्रायश्चित्तिः, उत्तरस्मिंस्तदन्वाख्याने ॥

तस्या एतस्या आषाढां पूर्वां करोति । तामेतस्या एव मृदः करोति । पादमात्री भवति । त्र्यालिखिता ॥ अथोखां करोति । अथ विश्वज्योतिषः करोति । ता एतस्या एव मृदः करोति यजमानः । अनन्तर्हिता उत्तराः करोति । त्र्यालिखिता भवन्ति । ता एता यजुष्कृतायै करोति, अयजुष्कृताया इतराः । निरुक्ता एता भवन्ति, अनिरुक्ता इतराः । परिमिता एता भवन्ति, अपरिमिता इतराः ॥ अथोपशयायै पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः ॥ अथैनामश्वशकैर्धूपयति । सप्ताश्वशकानि भवन्ति । यदु वा अपि बहु कृत्वः—सप्त सप्त ॥

अथैनमस्यांमदित्या खनति । अत्र सा वैणव्यभ्रिरुत्सीदति । चतुः स्रक्तिरेष कूपो भवन्ति । अथ पचनमवधायाषाढामवदधाति तूष्णीमेव । अथोखामादधाति । ता हता ओषधय एव । अथ विश्वज्योतिषोऽवदधाति तूष्णीमेव । अथ पचनमवधायाभीन्धे । अथ श्रपयति पचति द्वाभ्याम् ॥ तां सवित्रेण यजुषो द्रुपति । अथैनां पर्य्यावर्तयति । अथैनामुद्यच्छति । तां परिगृह्य निदधाति । अथैनामजायै पय साच्छृणत्ति ॥

---

## १—अथ दीक्षा ॥

उपरिष्टात् फाल्गुन्या अमावास्यायां दीक्षते । अतीनिह कर्म्माणि सन्ति—अग्निचित्या, राजसूयो, वाजपेयो, ऽश्वमेधः । भूयांसि हवींषि भवन्ति—अग्निचित्यायाम् ।

अग्ना वैष्णव एकादशकपालः, वैश्वानरो द्वादशकपालः, आदित्यश्चरुः। उभयंह्येतत्कर्म—अध्वरकर्म्म चाग्नि कर्म्मच। उभयानि निर्वपति। स यदाग्नावैष्णवं निर्वपति तदध्वरस्य दीक्षणीयम्। अथेतरे हविषी अग्नेः। अध्वरस्य पूर्वम्, अथाग्नेः वैश्वानरं पूर्वंनिर्वपति, अथ चरुम्। एक देवत्य एष वैश्वनरो बहु देवत्यश्चरुः घृतएष भवति॥ उपांश्वेतानिहत्रींषि भवन्ति॥

अथौदूग्रभणानि जुहोति॥ तानि वै भूयांसि भवन्ति—अग्निचित्यायाम्। उभयानि भवन्ति। अध्वरस्य पूर्वाण्यथाग्नेः॥ पञ्चाध्वरस्य जुहोति, सप्ताग्नेः। तान्युभयानि द्वादश संपद्यन्ते। तान्युहैके उखायामेवै तान्यौदूग्रभणानि जुह्वति। न तथा कुर्यात्। संस्थित एव यज्ञे हुतेष्वौदूग्रभणेषूखां प्रवृणक्ति। मुञ्जकुलायेनावस्तीर्णा भवति। शणकुलाय मन्तरं भवति। तां तिष्ठन् प्रवृणक्ति। उदङ् प्राङ् तिष्ठन्। द्वाभ्यां प्रवृणक्ति गायत्र्या च त्रिष्टुभाच तयोः सप्तपदानि॥ तां यदाग्निःसंतपति—अथैनामर्चि रारोहति। तद्धैके—यदिचिरमर्चिरारोहति—अङ्गारानेवावपन्ति। न तथा कुर्यात्। एनामर्चिरेवारोहेत्। तां यदार्चिरारोहति अथास्मिन् समिधमादधाति। सा कार्मुकीस्यात्। प्रादेशमात्री। घृतेन्युप्ता। तां तिष्ठन्नादधाति स्वाहाकारेण। बाह्योखाभवत्यन्तरेमुञ्जाः। बाह्यं मुञ्जा भवन्त्यन्तरेशणाः। बाह्य शणाभवन्त्यन्तरं घृतम्। बाह्यं घृतंभवत्यन्तरा समित्॥ अथवैकङ्कतीमादधाति। अथौदुम्बरीमादधाति। अथा परशुवृक्णमादधाति। अथाधः शयमादधाति॥ अथैता उत्तराः पालाश्योभवन्ति॥ ता एता एकादशादधाति— अक्षत्रियस्यवाऽपुरोहितस्य वा। द्वादशक्षत्रियस्य वा पुरोहितस्य वा। स पुरोहितस्यादधाति—अथक्षत्रियस्य। तास्त्रयोदश संपद्यन्ते। प्रादेशमात्र्यो भवन्ति। तिष्ठन्नादधाति स्वाहाकारेण॥

---

## २—समिदाधानम्।

अथ विष्णुक्रमान्क्रान्त्वा वात्सप्रेणोपस्थायास्तमिते आदित्ये भस्मैव प्रथम मुद्वपति। वाचविसृजते। वाचंविसृज्यसमिधमादधाति। अथ प्रातरुदितेआदित्ये भस्मैव प्रथम मुद्वपति। वाचंविसृज्य समिधमादधाति। अहोरात्रे वा अभिवर्तमानः संवत्सरमाप्नुतः। अथ यदाऽस्मैव्रतं प्रयच्छन्ति—अथ व्रतेन्यज्यसमिधमादधाति। न व्रतेन्यञ्ज्यादित्युहैके आहुः। स वै न्यञ्ज्यादेव। स वै समिधमाधायाथ व्रतयति॥

---

## ३—सत्यपराधे प्रायश्चितिः।

एतद्वैभिन्नायै प्रायश्चितिं कुर्वंति । यद्येषोखाभिद्येत, याभिन्नानवास्थाल्युरु विलीस्यात् तस्यामेनं पर्य्यावपेत्। तत्रोखायै कपालं पुरस्तात् प्रास्यति । अथ मृद-माहृत्य, उखां चोपशयां च पिष्ट्वासंसृज्योखां करोति । एतयैवावृता अनुपहरन् यजुस्तूष्णीमेवपक्वा पर्य्यावपति । कर्मणिरेव तत्रप्रायश्चितिः ॥ पुनस्तत्कपाल मुखायामुपसमस्योखांश्चोपशयां च पिष्ट्वा संसृज्य निदधाति प्रायश्चित्तिभ्यः ॥ अथ यद्येष उख्योऽग्निरनुगच्छेत् गार्हपत्यं वाव स गच्छति । गार्हपत्याद्धि स आहृतो भवति। गार्हपत्यादेवैनं प्राञ्चमुद्धृत्योपसमाधायोखां प्रवृञ्ज्यादेत यैवावृता अनुपहरन् यजुस्तूष्णीमेव। तां यदाऽग्निरारोहति। अथ प्रायश्चितीं करोति। उभे प्रायश्चित्ती करोति अध्वरप्रायश्चितिं चाग्निप्रायश्चितिं च। अध्वरस्य पूर्वामथाग्नेः। स समिधाज्यस्यो-पहत्यासीन आहुतिं जुहोति 'विश्वकर्मणे स्वाहा'–इति। अथोपोत्थायसमिधमादधाति॥१॥ अथ यदिगार्हपत्योऽनुगच्छेत्। अरणीवात्र स गच्छति। अरणिभ्यांहिसं आहृतो भवति। अरणिभ्यामेवैनं मथित्वोपसमाधाय प्रायश्चित्तीकरोति॥२॥ अथ यदिप्रस्तुत अहव-नीयोऽनुगच्छेत्, गार्हपत्यं वाव स गच्छति। गार्हपत्याद्धि स आहृतो भवति। गार्हपत्या देवैनं प्राञ्चं सां काशिनेन हृत्वोपसमाधाय प्रायश्चित्ती करोति॥ ३॥ यस्तस्मिन्कालेऽध्वर स्यात् तामध्वर प्रायश्चितिं कुर्य्यात्, समान्यग्नि प्रायश्चित्तिः॥४॥ अथ यद्याग्नीध्रीयोऽनुगच्छेद्, गार्हपत्यं वाव स गच्छति। गार्हपत्याद्धि स आहृतो भवति। गार्हपत्यादेवैनं प्राञ्चमुत्तरेण सदोहृत्वोपसमाधाय प्रायश्चित्ती करोति॥५॥ अथ यदिगार्हपत्योऽनुगच्छेत तस्योक्तो बन्धुः॥६॥

---

## ४—विधिशेषः॥

रुक्मं प्रतिमुच्य बिभर्ति। सहिरण्मयो भवति परिमण्डल एक विंशति नर्बाधः। बहिष्टान्निर्बाधं विभर्ति। कृष्णाजिने निष्यूतो भवति लोमतः। अभिशुक्लानि च कृष्णा-नि च लोमनि निष्यूतो भवति। शणो रुक्मपाशस्त्रिवृत्। तमुपरिनाभि विभर्ति। अथैन मासन्द्या बिभर्ति। औदुम्बरी भवति प्रादेश मात्र्यूर्ध्वा अरत्नि मात्री तिरश्ची। चतुः स्रक्तयः पादाभवन्ति। चतुः स्रक्तीन्यनूच्यानि। मौञ्जीभी रज्जुभिर्व्युता भवति त्रिवृद्भिः। मृदादिग्धा। अथैनं शिक्येन बिभर्ति। षडुधामं भवति मौञ्जं त्रिवृत्मृदा दिग्धम्॥ तस्याप एव प्रतिष्ठा॥ अथैन मुख्या विभर्ति। सो एव कुम्भी सा

स्थाली । अथैन मिण्ड्वाभ्यां परिगृह्णाति । परिमण्डले भवतो मौञ्जे त्रिवृती मृदादिग्वे । त मुदङ् प्राङ् तिष्ठन् प्रति मुञ्चते । अथैन मिण्ड्वाभ्यां परिगृह्णाति । अथः शिक्यपाशं प्रति मुञ्चते । अथैनमतो विकृत्या विकरोति । तां वा एत मत्र पक्षपुच्छवन्तं विकरोति । तं है के—एतया विकृत्याऽभिमन्त्र्यान्यां चितिं चिन्वन्ति—द्रोणचितं वा, रथचक्रचितिं वा कङ्कचितिं वा, प्रउगचितं वा उभयतः प्रउगं वा, समुह्य पुरीषं वा, ॥ नतथा कुर्य्यात् सुपर्णचितमेवैनं चिनुयात् । तमेतया विकृत्या इत उर्ध्वं प्राञ्चं प्रगृह्णाति । परोबाहु प्रगृह्णाति । अथैनमुपावहरति । तमुपावहृत्योपरिनाभि धारयति ॥ अथ विष्णु क्रमान क्रमते । उदङ् प्राङ् तिष्ठन् ॥ स पृथ्वी मनु विक्रमते प्रहरति पादं क्रमत ऊर्ध्व-मग्नि मुद्गृह्णाति । सोऽन्तरिक्ष मनु बिक्रमते । प्रहरति पादं क्रमत ऊर्ध्वमग्निमुद्गृ-ह्णाति । स दिवमनु विक्रमते, प्रहरति पादं क्रमत उर्ध्वमग्नि मुद्गृह्णाति । स सर्वादि-शोऽनु वीक्षते, न प्रहरति पादम्, ऊर्ध्वमेवाग्नि मुद्गृह्णाति ॥

अथैनमिति प्रगृह्णाति । परोबाहु प्रगृह्णाति । अथै न मुपावहरति । चतुष्कृत्वः प्रत्यवरोहति ! तमुपावहृत्यो परिनाभि धारयति । अथै न मभिमन्त्रयते—"आत्वाऽहार्ष मन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वावाञ्छन्तु मात्वद्राष्ट्रमभिभ्रशत्"–इति । अथ शिक्यपाशं च रुक्मपाशं च मुञ्चते । अथैनमिति प्रगृह्णाति । परो बाहु प्रगृह्णाति । अथैनमुपावहरति । विदधाति द्वाभ्यामक्षराभ्याम् । अथैनमुपतिष्ठते त्रिभिः ॥ अथ वात्सप्रेणोपतिष्ठते । ता आग्नेय्यस्त्रिष्टुभः । स वा अर्द्धमेव संवत्सरस्य विष्णुक्रमान् क्रमते, अर्द्धं वात्सप्रेणोपतिष्ठते । ताभ्यां वै विपर्य्यासमेति । तस्य वै पुरस्ताच्चोपरि-ष्टाच्चोभे विष्णुक्रम वात्सप्रे समस्यति । अहर्वै विष्णुक्रमा रात्रिर्वात्सप्रम् । अहोरात्रा-मुभयतः परिगृह्णाति । तदाहुः—"उभे एवाहन् भवतो न रात्र्याम्, कथमस्यापि रात्र्यां कृते भवतः" इति ॥ एतद्वा एने अदोदीक्षमाणः पुरस्तादपराह्णे उभेसमस्यति । रात्रि-र्हैतद् यदपराह्णः । अथैनेएतत् संनिवप्स्यन् उपरिष्टात्पूर्वाह्णे उभे समस्यति । अहर्है-तद् यत्पूर्वाह्णः । एव मुहास्योभेएवाहन् कृते भवत उभेरात्र्याम् ॥

स यदहः संनिवप्स्यन् स्यात् तदहः प्रातरुदिते आदित्येभस्मैव प्रथम मुद्वपति । भस्मोदुप्यवाचं विसृजते । वाचं विसृज्य समिधमादधाति ॥ समिधमाधाय भस्मापोऽभ्यवहरति । यथैव तस्याभ्यवहरणं तथाऽपादाय भस्मनः प्रत्येत्योखाया गोप्योपतिष्ठते, अथ प्रायश्चित्ती करोति । स यदि विष्णुक्रमीय महः स्यात्--विष्णु-क्रमान् क्रान्त्वावात्सप्रेणोपतिष्ठेत॥ अथ यदि वात्सप्रमीयम्—वात्सप्रेणोपस्थाय विष्णु क्रमान् क्रान्त्वावात्सप्रमन्ततः कुर्य्यात् । न विष्णुक्रमानन्ततः कुर्य्यात् ॥

---

## ५— बनींवाहनम् ।

वनींवाह्यं ताग्नि बिभ्रदित्याहुः । तद्वैक आहुः—स्वयं वा एष वनीवाहितः, विष्णुक्रमैर्वा एष प्रयाति, वात्सप्रेणावस्यतीति । न तथा विद्यात् । उ. यम्वैतत् प्रजापतिः यच्च देवाः यच्च मनुष्याः । तद् यद् विष्णुक्रमवात्सप्रे भवतस्तेनास्य दैवं रूपं संस्करोति । अथ यद्वनीवाह्यते तेनास्य मानुषं रुपं संस्करोति । तस्माद्वनीवाह्यो नैव ॥ सयदहः प्रयास्यन् स्यात् तदहरुत्तरतोऽग्नेः प्रागन उपस्थाप्य, अथास्मिन् समिधमादधाति । अथैनमुद्यच्छति । तं दक्षिणत उदञ्चमादधाति । रथ ल्यां गार्हपत्यं समुप्या परमादधाति । स यदि कामयेत—उपाधिरोहेत्, पार्श्वतो वा व्रजेत् ॥ अथानड्वाहौ युनक्ति । दक्षिणामग्रेऽथ सव्यम् । एवं देवत्रा, इतरथा मानुषे । स यां कांच दिशं यास्यन् स्यात्, प्राङ्वाग्रे प्रयायात् । स यदान्न उत्सर्जेत्—अथैतदु यजुर्जपेत्—"अक्रन्ददग्निस्तनयन्निवद्यौः"—इति ॥ स यदि पुरावसत्यै विमुञ्चेत—अनस्येवाग्निः स्यात् । अथ यदा वसत्यै विमुञ्चेत—प्रागन उपस्थाप्योत्तरत उद्धत्यावोक्षति यत्रैनमुपावहरति । तं दक्षिणत उदञ्चमुपावहरति । अथास्मिन् समिधमादधाति । स्थितवत्या वसत्यै ह्येनं तत् स्थापयति ॥

---

## ६—भस्माभ्यवहरणम् ।

अथातो भस्मन एवाभ्यवहरणस्य । एनदपोऽभ्यवहरति त्रिभिः । एकेनाग्रे, अथ द्वाभ्याम् । द्वाभ्यां वाग्रे, अथैकेन । द्विस्तु कृत्वोऽभवहरति । अथापादत्ते चतुर्भिः । अपादाय भस्मनः प्रत्येत्योखायामोप्योपतिष्ठते—आग्नयीभ्यां बुद्धवतीभ्यां द्वाभ्याम्—गायत्र्या च त्रिष्टुभा च ॥ अथ प्रायश्चिती करोति ॥ उभे प्रायश्चिती करोती ये एवाग्नावनुगते ॥

---

## ७—अथ गार्हपत्यचितिः ।

गार्हपत्यं चेष्यन् पलाशशाखयाव्युदूहति मन्त्रेण । तामुदीचीमुदस्यति । अथोषान्निवपति । तैः सर्वं गार्हपत्यं प्रच्छादयति ॥ अथ सिकता निवपति । ताभिः सर्वं गार्हपत्यं प्रच्छादयति ॥ अथैनं परिश्रिद्भिः परिश्रयति । सर्वतो दक्षिणावृत् खातेन । ता ऊर्ध्वा उपदध्यात् । न तिरश्चीः । एकेन यजुषाबह्वीरिष्टका उपदधाति ॥ न सादयति । न सूददोहसाऽधिवदति । बाह्याः परिश्रितो भवति—अन्तर ऊषाः । बाह्य ऊषा भवन्ति—अन्तराः सिकताः ॥

अथैनमतश्चिनोति । स चतस्रः प्राचीरुपदधाति । द्वे पश्चात् तिरश्च्यौ द्वे पुरस्तात् । तं वा एतमत्र पक्षपुच्छवन्तं करोति । तं वै पक्षपुच्छवन्तमेव सन्तं न पक्ष-

पुच्छयन्तमिव पश्यन्ति, अथैनममुत्र पक्षपुच्छवन्तं पश्यन्ति ॥ स चतस्रः पूर्वा उपदधाति। दक्षिणत उदङ्ङासीन उत्तरार्ध्यां प्रथमामुपदधाति। नानोपदधाति सकृत् सादयति। सूददोहसाधिवदति ॥ १ ॥ अथ जघनेन परीत्योत्तरतो दक्षिणाऽऽसीनोऽपरयोर्दक्षिणामग्रे उपदधाति। अथोत्तराम्। ते नानोपदधाति, नानासादयति, नानासूददोहसाऽधिवदति, द्वे भवतः। पश्चादुपदधाति। अग्राभ्यां संस्पृष्टे भवतः ॥ २ ॥ अथ तेनैव पुनः परीत्य दक्षिणत उदङ्ङासीनः पूर्वयोरुत्तरामग्रे उपदधाति। अथ दक्षिणाम्। ते नानोपदधाति, नानासादयति, नानासूददोहसाधिवदति। द्वे भवतः। पूर्वार्धे उपदधाति। आग्राभ्यां संस्पृष्टे भवतः ॥ ३ ॥ स वा इतीमा उपदधाति, इतीमे, इतीमे—तद्दक्षिणावृत्। तद्धि देवत्रा ॥ अष्टाविष्टका उपदधाति। पञ्चकृत्वः सादयति ॥ अथ लोकम्पृणामुपदधाति—तिस्रः पूर्वाः दशोत्तराः। द्वे वाऽग्रे, अथ दश, अथेकाम्। एवं हि चितिं चिन्वन्ति। तास्त्रयोदश सम्पद्यन्ते। ताः उभय्य एकविंशतिः सम्पद्यन्ते। ता एकविंशतिर्वैव परिश्रितः। तौ वा एतावत्र द्वावेकविंशौ संपादयति ॥

अथ पुरीषं निवपति। तच्चत्वालवेलाया आहरति। सा समं विलास्यात्। व्याममात्री भवति परिमण्डला ॥

अथैनौ सन्निवपति चतुर्भिः। तां न रिक्तामवेक्षेत। अथास्यां सिकता आवपति॥ सा समंविला स्यात्। अथैनां विमुञ्चति। तामुत्तरतोऽग्नेर्निदधात्यरत्निमात्रे। अथास्यां पय आनयति ॥ अधराः सिकता भवन्ति उत्तरं पयः। तन्मध्ये आनयति ॥ सेत्थागार्हपत्याग्नेश्चितिर्भवति ॥

अथातो नैर्ऋति हरस्य। नैर्ऋतीरिष्टका हरन्ति। तिस्रो वै ताः पादमात्र्यो भवन्ति-अलक्षणास्तुषपक्वाः कृष्णाः। ताभिरेतां नैर्ऋती दिशं यन्ति। स यत्र स्वकृतं वैरिणं श्वभ्रप्रदरो वा स्यात् तेदना उपदध्यात्। ताः पराचीर्लोकभाजः कृत्वोप दधाति। ता हैके परस्तादर्वाचीरुपदधाति। न तथा कुर्यात्। पराचीरेवोपदध्यात् नोपस्पृशति। न सादयति। न सूददोहसाधि वदति ॥ १ ॥

अथासन्दीं, शिक्यं,रुक्मपाशं, मिण्ड्वे,-तत्पराद्धेन्यस्यति। अथान्तरेणोदचमसं निनयति। उपोत्तिष्ठन्ति। अप्रतीक्षमायन्ति। प्रत्येत्याग्निमुपतिष्ठते ॥ सेत्थानिर्ऋतिहरस्याग्नेश्चितिर्भवति ॥

अथाहवनीयस्य प्रापणीयं निर्वपति। तस्य हविष्कृता वाचं विसृजते। वाचं विसृज्य स्तम्बयजुर्हरति। स्तम्बयजुर्हृत्वा पूर्वेण परिग्रहेण परिगृह्य लिखित्वाऽऽह-"हरत्रि:"-इति। हरति त्रिराग्नीध्रः। प्रत्येत्य प्रापणीयेन प्रचरति।

प्रापणीयेन प्रचर्य्य सीरः युनक्ति । औदुम्बरं सीरं भवति । मौञ्जं परि सीर्य्यं त्रिवृत् ॥ सोऽग्नेर्दक्षिणां श्रोणिं जघनेन तिष्ठन्नुत्तरस्यांसस्य पुरस्ताद् युज्यमानमभि मन्त्रयते–"सीरा युञ्जन्ति कवयो युगा वितन्वते पृथग् धीरा देवेषु सुम्नया । युनक्त सीरा वियुगा तनुध्वं कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिः सभरा असन्नोनेदीय इत् सृण्यः पक्वमेयात्–" इति ॥ द्वाभ्यां युनक्ति–गायत्र्या च त्रिष्टुभा च । स दक्षिणमेवाग्रे युनक्ति–अथ सव्यम् । एवं देवत्रा, इतरथा मानुषे । षड् गवं भवति, द्वादशगवं वा चतुर्विंशतिगवं वा । अथैनं विकृषति । स वा आत्मनमेव विकृषति न पक्षपुच्छानि । स दक्षिणार्द्धे नाग्ने रन्तरेण परिश्रितः प्राचीं प्रथमां सीतां कृषति । अथ जघनार्द्धे नोदीचीम् । अथोत्तरार्द्धेन प्राचीम् । अथ पूर्वार्द्धेन दक्षिणाम् । इत्यग्रे कृषति, अथेति, अथेति, अथेति । तद्दक्षिणावृत् । तद्धि देवत्रा ॥ चतस्रः सीता यजुषां कृषति । अथात्मानं विकृषतितूष्णीम् । इत्यग्रे कृषति, अथेति, अथेति, अथेति । तद्दक्षिणावृत् । तद्धि देवत्रा ॥ तिस्रस्तिस्रः सीताः कृषति । द्वादश सीतास्तूष्णीं कृषति । ता उभय्यः षोडश सपद्यन्ते । लेखा भवन्ति । अथैनान् विमुञ्चति । अथैनानुदीचः प्राचः प्रसृजति । तानध्वर्य्यवे ददाति । तांस्तु दक्षिणानां कालेऽनुदिशेत् ॥

अथ दर्भस्तम्ब मुपदधाति । सीतासमरे मध्यतस्तूष्णीम् ॥ अथैनमभि जुहोत्याज्येन पञ्च गृहीतेनोर्ध्वामुद्गृह्णन् त्रयोदशभिर्व्याहृतिभिस्त्रयोदशाग्नेश्चिति पुरीषाणि ॥

अथोदचमसान्निनयति । औदुम्बरेण चमसेन चतुः स्रक्तिनाः । त्रींस्त्रीनुदचमसान्निनयति । द्वादशोदचमसान् कृष्टे निनयति । त्रीन् कृष्टे चा कृष्टे च निनयति ॥ स पञ्चदशोदचमसान्निनयति । अथ सर्वौषधं वपति । औदुम्बरेण चमसेन चतुःस्रक्तिना तेषामेकमन्नमुद्धरेत्—तस्य नाश्नीयाद् यावज्जीवम् । अनुष्टुब्भिर्वपति । तिसृभिस्तिसृभिऋग्भिः । द्वादशभिऋग्भिः कृष्टे वपति । तिसृभिः कृष्टे चा कृष्टे च वपति । स पञ्चदशभिऋग्भिर्वपति ॥ ता अनुष्टुभो भवन्ति ॥

अथातो निरुक्तानिरुक्तानामेव । यजुषाद्वावनड्वाहौयुनक्ति, तूष्णीमितरान् । यजुषा चतस्रः सीताः कृषति, तूष्णीमितराः । तूष्णींदर्भस्तम्बमुपदधाति, यजुषाऽभिजुहोति । तूष्णीमुदचमसान्निनयति, यजुषावपति ॥ बाह्यानिरूपाणि निरुक्तानि भवन्ति अन्तराण्यनिरुक्तानि ॥

**चितो गार्हपत्यो भवति**—अचित आहवनीयः–अथ राजानं क्रीणाति । राजानं क्रीत्वा पर्य्युह्य–अथास्मै आतिथ्यं हविर्निर्वपति ! तस्य हविष्कृता वाचं विसृजते । अथा हवनीय स्यार्द्धमेति ॥

तद्धैके उभयत्रैव पलाशशाखया व्युदूहन्ति। न तथा कुर्य्यात्। अथ गार्हपत्य एवोषान्निवपति नाहवनीये॥ अथाहवनीय एव पुष्करपर्णमुपदधाति न गार्हपत्ये॥ उभयत्र सिकता निवपति। ता नाना मन्त्राभ्यां निवपति। द्राघीयसा मन्त्रेण हवनीये निवपति ह्रसीयसा गार्हपत्ये॥ स पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति। अथाहवनीये परिश्रितोऽभिमन्त्रयते। अथ सिकता निवपति। अथाहवनीये एवाप्या नवतीभ्यामभिमृशति न गार्हपत्ये॥

**अथ लोगेष्टका उपदधाति**—बाह्येनाग्नि माहरति। बहिर्वेदे। स्फ्येन स पुरस्तात् तामाहृत्यान्तरेण परिश्रित आत्मन्नुपदधाति। अथ दक्षिणतस्तामाहृत्यान्तरेण पक्ष सन्धि मात्मन्नुपदधाति। अथ पश्चात् तामाहृत्यान्तरेण पुच्छ सन्धि मात्मन्नुपदधाति। स न संप्रति पश्चादाहरेत्। इतइवा हरति॥ अथोत्तरतः आहरति। सिकताः प्रध्वंसयन्ति। तामेतरयां दिशिदधाति। तामा हृत्यान्तरेण पक्ष सन्धि मात्मन्नुपदधाति। ता एता दिशस्ताः सर्वतः उपदधाति। सर्वतः समीचीः। ता नानोपदधाति। नानासादयति। नाना सूददोह साधिवदति। तिष्ठन्नुपदधाति॥ ता एता यजुष्मत्य इष्टकाः आत्मन्नेवोपदधाति। न पक्ष पुच्छेषु॥ तदाहुः—"कथमस्यैताः पक्षाः श्रिता उपहिता भवन्तीति। यद्धै किञ्चै तमग्निवैश्वानरमुपनिगच्छन्ति तत एव तत् पक्ष श्रृत मुपहितं भवति" इति॥

**अथोत्तरवेदिं निवपति**—तां युगमात्रीं वा सर्वतः करोति। चत्वारिंशत्पदां वा यतरथा कामयेत। अथोत्तरवेदी सिकता निवपति षड् ऋचेन। ताभिः सर्वमात्मानं प्रच्छादयति॥ ता असंख्याता अपरिमिता निवपति। ता एता यजुष्मत्य इष्टकाः आत्मन्नेवोपदधाति न पक्षपुच्छेषु॥ न सादयति। अथैना आप्यानवतीभ्यामभिमृशति सौमीभ्याम्। एषो हैवात्र सूददोहाः॥ द्वाभ्या माप्पायति—गायत्र्याच त्रिष्टुभा च॥ आप्यानवतीभ्यामभिमृश्य प्रत्येत्यातिथ्येन प्रचरति।

आतिथ्येन प्रचर्य्य प्रवर्ग्योपसद्भ्यां प्रचरति। प्रवर्ग्योपसद्भ्यां प्रचर्य्य अथैतां चर्म्मणि चितिं समवशमयन्ति। लोमतो रोहिते आनडुहे प्राचीनग्रीवे। तद्धि देवत्रा॥ तदग्रेण गार्हपत्यमन्तर्वेद्युत्तर लोम प्राचीनग्रीव मुपस्तृणाति। तदेतां चिति समवशमयन्ति। अथ प्रोक्षति आज्येन तूष्णीमदर्भैरग्नेः॥ तदाहुः—यत् प्रथमा मेव चितिं प्रोक्षति कथमस्यैष सर्वोऽग्निः प्रोक्षितो भवति। कथं चर्मणि प्रणीतः कथ मश्व प्रणीत इति॥ यदेवात्र सर्वासां चितीनामिष्टकाः प्रोक्षति—एवमुहास्यैष सर्वोऽग्निः प्रोक्षितो भवति, एवं चर्म्मणि प्रणीतः, एव मश्व प्रणीतः॥ उद्यच्छन्त्येतां चितिम्॥ अथाह—"अग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहि"—इति। तद्धैकेऽन्वाहुः—"पुरीष्यासो अग्नयः प्राव-

वोभिः सजोषसः" इति । न तथा कुर्य्यात् ॥ आग्नेयीरेव तिस्रो गायत्रीः कामवतीरनुब्रूयात् । "आतेवत्सो मनो यमत् । तुभ्यं ता अङ्गिरस्तमः, अग्निः प्रियेषु धामसु"– इति ॥ उपांश्वन्वाह । पश्चादनु ब्रुवन्नन्वेति । अथाश्वं शुक्लं पुरस्तान्नयन्ति । आगच्छन्त्यग्नि दक्षिणतः पुच्छस्य चिति मुपनिदधति उत्तरतोऽश्वमा क्रमयन्ति । तमुत्तरार्द्धेनाग्ने रन्तरेण परिश्रितः प्राञ्चं नयन्ति । तं दक्षिणा । तं प्रत्यञ्चम् । तमुदञ्चम् । अथैन मुदञ्चम् प्राञ्चं प्रसृजति । तं प्रत्यञ्चं यन्नमेतां चितिमवघ्रापयति स शुक्लः स्यात् । यदि शुक्लं न विन्देद्–अथ शुक्लः स्यात् । अश्वस्त्वेव स्यात् । यद्यश्वं न बिन्देद् अप्यनड्वानेव स्यात् ॥ अथातोऽधिरोहणस्यैव । तं हैके पुरस्तात् प्रत्यञ्चमधिरोहति पश्चाद्वा प्राञ्चम् । न तथा कुर्य्यात् । तमात्मनैवैनमारोहेत् । उत्तरतः आरुह्याग्नि मौत्तर वेदिकं कर्म कृत्वाऽऽत्मन्नग्निं गृह्णीतेचेष्यन् । स वै तिष्ठन्नात्मन्नग्निं गृहीत्वाऽनुपविश्य चिनोति । अथ सत्यं साम गायति ॥ अथ पुष्करपर्णं मुपदधाति तां वा एतामिष्टकां सत्य साम्नोऽनन्तर्हितां स्वराजोपदधाति । अपां सादयित्वा सूददोहसाधिवदति ॥ अथैतं सायेभूतेऽश्वपरिणयन्ति । तं वा उपास्तमयमादित्यस्य परिणयति । सर्वतः त्रिष्कृत्वः ॥ अथैन मुदञ्चं प्राञ्चं प्रसृजति । अथ स पुनर्विपल्ययते ॥ अथ रुक्म मुपदधाति । स हिरण्मयो भवति परिमण्डल एकविंशति निर्बाधः । अधस्तान्निर्बाधमुपदधाति । तं पुष्कर पर्णे उपदधाति त्रिष्टुभा । सादयित्वा सूददोहसाधिवदति ॥ अथ पुरुष मुपदधाति । स हिरण्मयो भवति । त मुत्तानं रुक्म उपदधाति द्वाभ्यां त्रिष्टुब्भ्याम् ॥ सादयित्वा सूददोहसाऽधिवदति । अथ साम गायति । पुरुषे गायति । चित्रे गायति । तमुपधाय न पुरस्तात् परीयात् । अथ सर्प नामै रुपतिष्ठते त्रिभिस्तिष्ठन् :—

नमोऽस्तु सर्पेभ्यो ये केच पृथिवी मनु ।
ये अन्तरिक्षे ये दिवितेभ्यः सर्पेभ्यो नमः ॥ १ ॥
या इषवो यातुधानानां ये वा वनस्पतीं रनु ।
ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥ २ ॥
ये वाऽमी रोचते दिवो ये वा सूर्य्यस्य रश्मिषु ।
येषा मप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥ ३ ॥

अथैन मुपविश्याभि जुहोति । आग्नेयीभिस्त्रिष्टुब्भिः । आज्येन पञ्च गृहीतेन सर्वतः परिसर्पन् । पश्चादग्नेः प्राङासीनः । अथोत्तरतो दक्षिणा । अथ पुरस्तात् प्रत्यङ् । अथ जघनेन परित्य दक्षिणत उदङ्ङासीनः । तद्दक्षिणावृत तद्धिदेवत्रा । अथानु परीत्य पश्चात् प्रङासीनः ॥ अथ स्रुचा उपदधाति पार्श्वतः जुहूर्दक्षिणो हस्तः उपभृत् सव्यः । इदमेव कपुच्छल मयं दण्डः ॥ कार्ष्मर्य्य मयीं दक्षिणत उपदधाति । आज्येन

पूर्णा भवति ॥ अथौदुम्बरी मुत्तरत उपदधाति । दध्ना पूर्णा भवति । स संप्रत्युत्तरः पुरुषमाकाश्य यत्राभ्याप्नोति तदा लिख्यैने उपदधाति । ते हैके तिरश्चाउपदधाति । न तथा कुर्य्यात् । प्राच्यावेवोपदध्यात् । तेनानोपदधाति, नाना सादयति, नाना सूददोहासाऽधिवदति ।

स्वय मातृण्णा मुपदधाति । तामनन्तर्हितां पुरुषादुपदधाति, उत्तराम् । तां वै प्रजापति नोपदधाति ॥ सादयित्वा सूददोहसाधिवदति । अथ साम गायति ।

अथ दूर्वेष्टका मुपदधाति द्वाभ्याम् । तामन्तर्हितां स्वयमातृण्णाया उपदाति । उत्तराम् । सा स्यात् समूला साग्रा । सादयित्वा सूददोहसाऽधिवदति ॥

अथ द्वियजुषमुपदधाति द्वाभ्याम् । तामनन्तर्हितां दूर्वेष्टकाया उपदधाति । सादयित्वा सूददोहसाऽधिवदति ॥

अथ रेतः सिचाउपदधाति । नानोपदधाति सकृत् सादयति । ते अनन्तर्हिते द्वियजुष उपदधाति ॥

अथविश्वज्योतिषमुपदधाति । ता मन्तर्हितां रेतः सिग्भ्यामुपदधाति । अन्तरेवो पदधाति । सादयित्वा सूददोहसाऽधिवदति ॥

अथ ऋतव्ये उपदधाति द्वे इष्टके भवतः । सकृत् सादयति । ते अनन्तर्हिते विश्वज्योतिष उपदधाति ॥

अथाषाढ़ामुपदधाति । तां पूर्वार्द्धे उपदधाति । सेयं वामभृत् । तान्नान्यया यजुष्मत्येष्टकया पुरस्तात् प्रत्युपदध्यादेतस्यां चितौ ॥ अपस्याः पञ्च पुरस्तादुपदधाति । तामन्तर्हिता मृतव्याभ्या मुपदधाति । सादयित्वा सूददोहसाऽधिवदति ॥

कुर्म्मं मुपदधाति । त्रिभिः ॥ तमभ्यनक्ति दध्ना मधुना घृतेन । तं पुरस्तात् प्रत्यञ्चमुपदधाति पुरुषमभ्यावृत्तं दक्षिणतोऽषाढायै अरत्निमात्रे गायत्रीभिस्तिसृभिः । अथैनमेजपति । 'अवका अधस्ताद् भवन्ति, अवका उपरिष्टात्' । सादयित्वा सूददोह-साऽधिवदति ॥

अथोलूखलमुसले उपदधाति । तेरेतः सिचोर्वेलयोपदधाति—उत्तरेऽरत्निमात्रे । प्रादेशमात्रे भवतः औदुम्बरे ॥ चतुःस्रक्ति भवति मध्ये संगृहीतम् । द्विदेवत्ययोपदधाति । सकृत् सादयति । सादयित्वा सूददोहसाऽधिवदति ॥

अथोखामुपदधाति द्वाभ्याम् । तामुलूखले उपदधाति । अथोपशयां पिष्ट्वा लोकः

भाजमुखां कृत्वा पुरस्तादुखायाः उपनिवपति । तदाहुः—कथमस्यैषा पक्वा शृतोपहिता भवतीति । यद्वै किञ्चैतमग्नि वैश्वानरमुपनिगच्छति तत एव तत् पक्वं शृतमुपहितं भवति । सादयित्वा सूददोहसाऽधिवदति ।। अथैनामभि जुहोति । आज्येन स्रुवेण स्वाहाकारेण द्वाभ्यां युक्तवतीभ्यामाग्नेयीभ्यां गायत्रीभ्याम् ।। स यदि संवत्सरभृतः स्यादथाभिजुहुयात् ।। अथ यद्य संवत्सरभृतः स्यादुपैव तिष्ठेत । अभित्वेव जुहुयात् । पशुरेष यदग्निः । तं वा एतमित ऊर्ध्वं प्राञ्चं चिनोति । अथैनं प्रसलव्यावर्तयति । वृत्तमिव मुसलं भवति । तद्दक्षिणत उपदधाति ।।

पशुशीर्षाण्युपदधाति । तान्युखायामुपदधाति । तान् पुरस्तात् प्रतीच उपदधाति अथैषु सप्त हिरण्यशकलान् प्रत्यस्यति । अथ यदि पञ्चपशवःस्युः—पञ्चैव कृत्वः सप्त सप्त प्रत्यस्येत् । तद्धैके—अपि यद्येकः पशुर्भवति पञ्चैव कृत्वः सप्त सप्त प्रत्यस्यन्ति । न तथा कुर्य्यात् । तद्ध मुखे प्रथमं प्रत्यस्यति । अथ पुरुषशीर्ष-मुद्गृह्णाति । अथैनामुपदधाति । मध्ये पुरुषमभित इतरान् पशून् ।। अश्वं चाविं चोत्तरतः गां चाजं च दक्षिणतः । पयसि पुरुषमुपदधाति । अथोत्तरतोऽश्वम् । अथ दक्षिणतो गाम् । अथोत्तरतोऽविम् । अथ दक्षिणतोऽजम् । त एते पशवः । तान् नानोपदधाति । नाना सादयति । नाना सूददोहसाऽधिवदति ।। अथ पुरुषशीर्षमभि जुहोति । आज्येन, स्वाहाकारेण, त्रिष्टुभा । स वा अर्द्धर्चमनुद्रुत्य स्वाहा करोति । अथोत्तरमर्द्धर्चमनुद्रुत्य स्वाहा करोति । अथोत्सर्गैरुपतिष्ठते । पुरुषस्य प्रथममुत्सृजति—"इमं मा हिंसीर्द्विपादं पशुं सहस्राक्षो मेधाय चीयमानः । मयुं पशुं मेधामग्ने जुषस्व तेन चिन्वानस्तन्वोनिषीद । मयुं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु:" इति । अथाश्वस्य । "इमं मा हिंसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ।गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु"-इति । अथ गोः । "इमं सहस्रं शतधारमुत्सं, व्यच्यमानं सरिरस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने माहिंसीः परमेव्योमन् । गवय मारण्य मनु ते दिशामि तेन चिन्वानस्तन्त्रो निषीद । गवयं ते शुगृच्छतु यं द्विषमस्तं ते शुगृच्छतु"-इति ।। अथावेः । "इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदां त्वष्टुः प्रजानां प्रथमं जनित्रम् । अग्ने मा हिंसीः परमे व्योमन्नुष्ट्रमारण्य मनु ते दिशामि । तेन चिन्वानस्तन्वो निषीद । उष्ट्रं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु"-इति ।। अथाजस्य "अजो ह्यग्ने रजनिष्ट शोकात् सोऽपश्यज्जनितारमग्ने । तेन देवा देवतामग्र आयन् तेन रोहमायन्नुप मेध्यासः ।शरभमारण्यमनु ते दिशामि । तेन चिन्वानस्तन्वो निषीद । शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु"-इति ।। प्रत्येत्याग्निमुपतिष्ठते—आग्ने-

य्या गायत्र्याऽनिरुक्तया यविष्ठवत्या । "त्वं यविष्ठ दाशुषेन्नॄं पाहि शृणुधी गिरः । रक्षा तोकमुतत्मना"—इति । आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्या उपदधाति । अनन्तर्हिताः पशुभ्य उपदधाति । पञ्च पञ्चोपदधाति । सर्वतः । तद्याः पञ्चदश पूर्वास्ता अपस्याः । अथ याः पञ्चोत्तराः ताश्छन्दस्याः । अनन्तर्हिताः पशुभ्य उपदधाति । अन्तरा अपस्या भवन्ति बाह्याश्छन्दस्याः ॥ बाह्योखा भवति, अन्तराणि पशुशीर्षाणि । सर्वत उपदधाति । अन्तेषूपदधाति । चतुर्धोपदधाति । पञ्चपञ्चोपदधाति । नानोपदधाति । सकृत् सकृत् सादयति ॥ प्राणभृत उपदधाति । ताः प्रथमायां चिता उपदधाति । ता दशदशोपदधाति । पञ्चकृत्वः ॥ अनन्तर्हिताः पशुभ्य उपदधाति । सर्वतः । स पुरस्तादुपदधाति । नानोपदधाति । सकृत् सादयति । सैषा त्रिवृदिष्टका यजुः सादनं सूददोहाः इति ॥

अयं पुरो भुवः । तस्य प्राणो भौवायन् । वसन्तः प्राणायनः । गायत्री वासन्ती । गायत्र्यै गायत्रम् । गायत्रादुपांशुः । उपांशोस्त्रिवृत् । त्रिवृतोरथन्तरम् ॥ वसिष्ठऋषिः । प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ॥ १ ॥

अथ दक्षिणतः । नानोपदधाति । सकृत् सादयति । सैषा त्रिवृदिष्टका ॥

अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणम् । ग्रीष्मोमानसः । त्रिष्टुब् ग्रैष्मी । त्रिष्टुभः स्वारम् । स्वारादन्तर्यामः । अन्तर्यामात् पञ्चदशः । पञ्चदशाद् बृहत् । भरद्वाज ऋषिः प्रजापति गृहीतया त्वया मनो गृह्णामि प्रजाभ्यः ॥ २ ॥

अथ पश्चात् । नानोपदधाति । सकृत् सादयति । सैषा त्रिवृदिष्टका ॥

अयं पश्चाद् विश्वव्यचाः । तस्य चक्षुर्वैश्वव्यचसम् । वर्षाश्चक्षुष्यः । जगती-वार्षी । जगत्या ऋक् समम् । ऋक्समाच्छुक्रः । शुक्रात् सप्तदशः । सप्तदशाद् वै-रूपम् । जमदग्नि ऋषिः । प्रजापति गृहीतया त्वया चक्षुर्गृह्णाति प्रजाभ्यः ॥ ३ ॥

अथोत्तरतः । नानोपदधाति । सकृत् सादयति । सैषा त्रिवृदिष्टकाः ॥

इदमुत्तरात् स्वः । तस्य श्रोत्रं सौनम् । शरच्छ्रौत्री । अनुष्टुप् शारदी । अनुष्टुभ ऐडम् । ऐडान्मन्थी । मन्थिन एकविंशः । एकविंशाद् वैराजम् । विश्वामित्र ऋषिः । प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः ॥ ४ ॥

अथ मध्ये । नानोपदधाति । सकृत् सादयति । सैषा त्रिवृदिष्टका ॥

इयमुपरिमतिः । तस्यै वाङ्मत्या । हेमन्तोवाच्यः । पङ्क्तिर्हैमन्ती । पङ्क्त्यै

निधनवत् । आग्रायणः । आग्रयणात् त्रिणवत्रयस्त्रिंशौ । त्रिणवत्रयस्त्रिंशाभ्यां शाकररैवते ॥ विश्वकर्म्मा ऋषिः । प्रजापति गृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ॥

एतावान् वै सर्वो यज्ञः । यज्ञ उ देवानामन्नम् । एतद्वै प्राणश्च प्रजापतिश्चासृजता एताः । प्राणभृतो दशदशोपदधाति सर्वतः तां अक्ष्णमादेशेषूपदधाति । तद् याः पुरस्तादुपदधाति ताः प्राणभृतः, ता उ प्राणभृतः । अथ याः पश्चात् ताश्चक्षुर्भृतः, ता उ अपानभृतः ॥ अथ या दक्षिणतस्तामनो भृतः, ता उ व्यानभृतः ॥ अथ या उत्तरतस्ताः श्रोत्रभृतः, ता उ उदानभृतः ॥ अथ या मध्ये ता वागभृतः, ता उ समानभृतः ॥ तदु ह चकाध्वर्यवः—अन्या एवापानभृतो व्यानभृत उदानभृत समानभृतः । चक्षुर्भृतो मनोभृतः श्रोत्रभृतो वागभृतः—इत्युपदधाति । न तथा कुर्य्यात् । अत्रो एवैतानि सर्वाणि रूपाण्युपधीयन्ते ॥ स वै पुरस्तादुपधाय पश्चादुपदधाति । अथ दक्षिणत उपधायोत्तरत उपदधाति । अथ या मध्ये उपदधाति ता रेतः सिचोर्वेलयोपदधाति ॥ सर्वत उपदधाति । अनूचीश्च तिरश्चीश्चोपदधाति । ता है के पुरुषमुपार्य्योपदधाति । न तथा कुर्य्यात् । एताः परिश्रित्स्वेवोपार्य्योपदध्यात् । अथ या मध्ये उपदधाति ताभिरस्यैष आत्मापूरणः । ता उ एवैतस्यादनन्तर्हिताः ॥ तदाहुः—यत्पूर्वेषु गणेष्वेकैकं स्तोममेकैकं पृष्ठमुपदधाति, अथ कस्मादत्र द्वौ स्तोमौ द्वे पृष्ठे उपदधतीति । आत्मा वा अस्यैषः । आत्मानं तदङ्गानां ज्येष्ठं वरिष्ठं वीर्य्यवत्तमं करोति ॥

अथ लोकम्पृणे उपदधाति । अस्यां स्रक्त्याम् ॥ पुरीषं निवपति ॥

१—इति प्रथमा चितिः ॥

---

२—द्वितीयां चितिमुपदधाति ।

पञ्च आश्विनीरुपदधाति ता रेतः सिचोर्वेलयोपदधाति । सर्वतः । सर्वतः समीचीः । ता नानोपदधाति । नाना सादयति । नाना सूददोहसाऽधिवदति ॥ अथ पञ्चमीं दिश्यामुपदधाति । तामन्तरेण दक्षिणां दिश्यामुपदधाति ॥ १ ॥ अथ ऋतव्ये उपदधाति । द्वे इष्टके भवतः ॥ २ ॥ अथ पञ्चवैश्वदेवीरुपदधाति । ता रेतः सिचोर्वेलयोपदधाति । सर्वतः । ता वै समानप्रभृतयः समानोदर्काः, नाना मध्यतः ॥ ३ ॥ अथ पञ्चप्राणभृतः उपदधाति । रेतः सिचोर्वेलयोपदधाति सर्वतः, सर्वतः समीचीः । दिश्या अनूपदधाति । ता अनन्तर्हिताः वैश्वदेवीभ्यः उपदधाति ॥ ४ ॥ अथा पञ्चापस्या उप-

दधाति। रेतः सिचोर्वेलया सर्वतः,सर्वतः समीचीः।वायव्या अनूपदधाति॥ता अनन्तर्हिताः प्राणभृद्भ्य उपदधाति ॥ ५ ॥ अथैकान्नविंशतिश्छन्दस्या उपदधाति ॥ सर्वतः उपदधाति। अपस्या अनूपदधाति।

मूर्द्धावयः—प्रजापतिश्छन्दः॥ १ ॥ क्षत्रं वयः—मयन्दं छन्दः ॥ २ ॥ विष्टम्भो वयः-अधिपतिश्छन्दः ॥३॥ विश्वकर्मा वयः परमेष्ठी छन्दः ॥४॥ तानि वा एतानि चत्वारि वयांसि चत्वारि छन्दांसि । तानि पुरस्तादुपदधाति॥

अथ दक्षिणतः ॥ वस्तो वयः—विवलं छन्दः ॥ १ ॥ वृष्णिर्वयः—विशालं छन्दः ॥ २ ॥ पुरुषोवयः तन्द्रं छन्दः ॥ ३ ॥ व्याघ्रोवयः—अनाधृष्टं छन्दः ॥ ४ ॥ सिंहोवयः—छदिश्छन्दः ॥ ५ ॥ तानि वा एतानि पञ्चदक्षिणत उपदधाति ॥ अथोत्तरतः। अथातो निरुक्तनेव पशून् निरुक्तानि छन्दांस्युपदधाति—

षष्ठवाड्वयः – वृहतीछन्दः ॥ १ ॥ उक्षावयः—ककुप्छन्दः ॥ २ ॥ ऋषभोवयः—सतोबृहतीछन्दः ॥३॥ अनड्वान् वयः—पङ्क्तिश्छन्दः ॥ ४ ॥ धेनुर्वयः—जगतीछन्दः ॥ ५ ॥ तानि वा एतानि पञ्चोत्तरत उपदधाति। अथ पश्चात्—

त्र्यविर्वयः—त्रिष्टुप् छन्दः ॥१॥ दित्यवाड्वयः—विराट् छन्दः ॥२॥ पञ्चाविर्वयः—गायत्रीछन्दः ॥३॥ त्रिवत्सोवयः-उष्णिक् छन्दः ॥४॥ तुर्य्यवाड्वयः-अनुष्टुप् छन्दः॥५॥तानि वा एतानि पञ्चपश्चादुपदधाति॥

तद् यानिवर्षिष्ठानिछन्दांसि ये स्थविष्ठाः पशवः तान् मध्यत उपदधाति। अथ ये वीर्य्यवत्तमाः पशवस्तान् दक्षिणतः उपदधाति ॥ पूर्वार्द्धं च जघनार्द्धं चाणिष्ठौ करोति। यद्गृहामूश्चतस्रस्तेनैता अणिष्ठाः। अथ यदिह ह्रसिष्ठान् पशूनुपदधाति तेनो एता अणिष्ठाः ॥

अथ लोकम्पृणे उपदधाति अस्यां स्रक्त्याम् ॥ पुरीषं निवपति ॥

---

३—तृतीयां चितिमुपदधाति ॥

स वा इन्द्राग्निभ्यामुपदधाति, विश्वकर्मणा सादयति ॥ स मध्यमां स्वयमातृण्णामत्रोपदधाति । सादयित्वा सूददोहसाधिवदति ॥ अथ सामगायति ॥१॥ अथ पञ्चदिश्या उपदधाति । ताः पुरस्ताद्दर्भस्तम्बं च लोगेष्टकाश्चोपदधाति । ता अनन्तर्हिताः स्वयमातृण्णाया उपदधात्युत्तरा, रेतः सिचोर्वेलाया, सर्वतः समीचीः । ता नानोपदधाति । नाना सादयति । नाना सूददोहसाऽधिवदति ॥ २ ॥ अथ विश्वज्योतिषमुपदधाति ॥ तामनन्तर्हितां दिश्याभ्य उपदधाति ॥ सादयित्वा सूददोहसाधिवदति ॥ ३ ॥ अथ ऋतव्या उपदधाति । द्वे इष्टके भवतः ॥ सकृत् सादयति । अवकासूपदधाति । अवकाभिः प्रच्छादयति । आपो वा अवकाः ॥ अथोत्तरे ऋतव्ये उपदधाति । द्वे इष्टके भवतः । सकृत् सादयति । अवका सूपदधाति । नो परिष्टात् प्रच्छादयति ॥ ता वा एताश्चतस्र ऋतव्या मध्यमायां चिता उपदधाति । द्वे द्वे इतरासु चितिषु ॥ ता वा एताश्चतस्र ऋतव्याः, तासां विश्वज्योतिः पञ्चमी, पञ्चदिश्याः । तद्दश । ता अनन्तर्हिताः स्वयमातृण्णाया उपदधाति ॥ उत्तराः ॥ ४ ॥ अथ दश प्राणभृत उपदधाति । ता अनन्तर्हिता ऋतव्याभ्य उपदधाति ॥ ५ ॥ अथ छन्दस्या उपदधाति ॥ ता द्वादश द्वादशोपदधाति ॥ ता अनन्तर्हिताः प्राणभृद्भ्य उपदधाति । उत्तराः ॥

मा छन्दः ॥ १ ॥ प्रमा छन्दः ॥ २ ॥ प्रतिमा छन्दः ॥ ३ ॥ अस्रीवयश्छन्दः ॥ ४ ॥ अथातो निरुक्तान्येव छन्दांस्युपदधाति ॥ पङ्क्तिश्छन्दः ॥ ५ ॥ उष्णिक् छन्दः ॥ ६ ॥ बृहती छन्दः ॥ ७ ॥ अनुष्टुप् छन्दः ॥ ८ ॥ विराट् छन्दः ॥ ९ ॥ गायत्री छन्दः ॥ १० ॥ त्रिष्टुप् छन्दः ॥ ११ ॥ जगती छन्दः ॥ १२ ॥ इति ॥ एतानि निरुक्तानि विराडष्टमानि छन्दांस्युपदधाति ॥ स वै निरुक्तानि चानिरुक्तानि चोपदधाति ॥ तानि वा एतानि त्रीणि ॥ द्वादशान्युपदधाति । तत् षट् त्रिंशत् । तद् या दश प्रथमा उपदधाति अथ या उत्तराः षट् त्रिंशत् । ता अनन्तर्हिता ऋतव्याभ्य उपदधाति ॥ ६ ॥ अथ बालखिल्या उपदधाति । स वै सप्त पुरस्तादुपदधाति । सप्त पश्चात् । तद् याः सप्त पुरस्तादुपदधाति ता अनन्तर्हिता एताभ्यो दशभ्य उपदधाति । अथ याः सप्त पश्चात् ता अनन्तर्हिता एताभ्यो द्वादशभ्य उपदधाति ॥ तदेता एकसप्ततिः॥अथ लोकम्पृणे उपदधाति अस्यां स्रक्त्याम्॥पुरीषं निवपति ॥

---

## ४—चतुर्थी चितिमुपदधाति ॥

अष्टादश स्तोमानुपदधाति—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| आशुस्त्रिवृत् | ९ | धरुण एकविंशः | २१ | अभीवर्तः सविंशः | २० | योनिश्चतुर्विंशः | २४ |
| भान्तः पञ्चदशः | १५ | प्रतूर्तिरष्टादशः | १ ः | वर्चो द्वाविंशः | २२ | गर्भाः पञ्चविंशः | २५ |
| व्योमा सप्तदश | १७ | तपो नवदशः | १९ | संभरणस्त्रयोविंशः | २३ | ओजस्त्रिणवः | २७ |
| ऋतुरेकत्रिंशः | ३१ | नाकः षट् त्रिंशः | ३६ | | | | |
| प्रतिष्ठा त्रयस्त्रिंशः | ३३ | विवर्तोऽष्टाचत्वारिंशः | ४८ | | | | |
| ब्रध्नस्य विष्टपं चतुस्त्रिंशः | | धर्त्रं चतुष्टोमः | | | | | |

ता वा एता अष्टादशेष्टका उपदधाति ॥ १ ॥ अथ दश स्पृत उपदधाति ॥

१—अग्नेर्भागोऽसि, दीक्षया आधिपत्यम्, ब्रह्मस्पृतम् , त्रिवृत् स्तोमः ॥ ९
२—इन्द्रस्य भागोऽसि, विष्णोराधिपत्यम् , क्षत्रं स्पृतम् , पञ्चदशास्तोमः ॥ १५
३—नृचक्षसां भागोऽसि, धातुराधिपत्यम् , जनित्रंस्पृतम्, सप्तदशास्तोमः ॥ १७
४—मित्रस्य भागोऽसि, वरुणस्याधिपत्यम्, दिवोवृष्टिर्वातःस्पृतः, एकविंशः स्तोमः । २१
५—वसूनां भागोऽसि, रुद्राणामाधिपत्यम् , चतुष्पात् स्पृतम्, चतुर्विंशः स्तोमः । २४
६—आदित्यानां भागोऽसि, मरुतामाधिपत्यम्, गर्भाः स्पृताः, पञ्चविंशः स्तोमः । २५
७—अदित्यै भागोऽसि, पूष्ण आधिपत्यम् , ओजः स्पृतम् , त्रिणवः स्तोमः । २७
८—देवस्य सवितुर्भागोऽसि, बृहस्पतेराधिपत्यम्, समीचीर्दिशः स्पृताः, चतुष्टोमः स्तोमः ॥
९—यवानां भागोऽसि, अयवानामाधिपत्यम्, प्रजाः स्पृताः, चतुश्चत्वारिंशः स्तोमः ॥ ४४
१०—ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यम् , भूतं स्पृतम् , त्रयस्त्रिंशःस्तोमः ॥ ३३

ता वा एता दशेष्टका उपदधाति ॥१॥ अथ ऋतव्ये उपदधाति ॥ द्वे इष्टके भवतः॥२॥

अथ सप्तदश सृष्टीरुपदधाति--

१—एकयाऽस्तुवत, प्रजा अधीयन्त, प्रजापतिरधिपतिरासीत् ।
२—तिसृभिरस्तुवत, ब्रह्म सृज्यत, ब्रह्मणस्पतिराधिपतिरासीत् ।
३—पञ्चभिरस्तुवत, भूतान्यसृज्यन्त, भूतानां पतिराधिपतिरासीत् ।
४—सप्तभिरस्तुवत, सप्तऋषयोऽसृज्यन्त, धाताधिपतिरासीत् ।
५—नवभिरस्तुवत, पितरोऽसृज्यन्त, अदितिरधिपत्न्यासीत् ।
६—एकादशभिरस्तुवत, ऋतवोऽसृज्यन्त, आर्तवा अधिपतय आसन् ।
७—त्रयोदशभिरस्तुवत, मासा असृज्यन्त, संवत्सरोऽधिपतिरासीत् ।

८—पञ्चदशभिरस्तुवत, क्षत्रमसृज्यन्त, इन्द्रोऽधिपतिरासीत् ।
९—सप्तदशभिरस्तुवत, ग्राम्याः पशवोऽसृज्यन्त, बृहस्पतिरधिपतिरासीत् ।
१०—नवदशभिरस्तुवत, शुद्रार्य्यावसृज्येताम्, अहोरात्रे अधिपत्नी आस्ताम् ।
११—एकविंशत्याऽस्तुवत, एकशफाः पशवोऽसृज्यन्त, वरुणोऽधिपतिरासीत् ।
१२—त्रयोविंशत्यास्तुवत, क्षुद्राः पशवोऽसृज्यन्त पूषाधिपतिरासीत् ।
१३—पञ्चविंशत्यास्तुवत, आरण्याः पशवोऽसृज्यन्त, वायुरधिपतिरासीत् ।
१४—सप्तविंशत्यास्तुवत, द्यावापृथिवीव्यैताम्, वासवो रुद्रा आदित्या अनुव्यायन्, त एवाधिपतय आसन् ॥
१५—नवविंशत्यास्तुवत, वनस्पतयोऽसृज्यन्त, सोमोऽधिपतिरासीत् ।
१६—एकत्रिंशतास्तुवत, प्रजा असृज्यन्त, यावाश्चायवाश्चाधिपतय आसन् ।
१७—त्रयस्त्रिंशतास्तुवत, भूतान्यशाम्यन्, प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥

ता वा एताः सप्तदशेष्टका उपदधाति । रेतः सिचोर्वेलया । सर्वतः ॥ ३ ॥

अथातोऽन्वावृतम् । त्रिवृद्वतीं पुरस्तादुपदधाति । (❀ एकविंशवतीं पश्चात् । पञ्चदशवतीं दक्षिणतः । सप्तदशवतीमुत्तरतः ॥ अथोत्तराः त्रिवृद्वत्यामेव त्रिवृद्वतीमनूपदधाति एकविंशवत्यामेकविंशवतीम् । पञ्चदशवत्यां सप्तदशवतीम् । सप्तदशवत्यां पञ्चदशवतीम् । ता यदेवं व्यतिहारमुपदधाति तस्माद्दक्षिणयास्तोमीयाः । त्रिवृद्वत्यौ द्वे भवतः । पूर्वार्द्धे उपदधाति । एकविंशवत्यौ द्वे भवतः ।) पश्चादुपदधाति । पञ्चदशवत्यौ द्वे भवतः । पार्श्वत उपदधाति । सप्तदशवत्यौ द्वे भवतः ॥ ते अनन्तर्हिते पञ्चदशवतीभ्यामुपदधाति । बाह्ये पञ्चदशवत्यौ भवतोऽन्तरे सप्तदशवत्यौ । अथ या मध्ये उपदधाति । स आत्मा ॥ ता रेतः शिचोर्वेलयोपदधाति । सर्वतः । ताहैकेऽनन्तर्हिता त्रिवृद्वतीभ्यामुपदधाति । न तथा कुर्य्यात् । अस्मिन्नु हैकेऽवान्तरदेशे उपदधाति ॥ न तथा कुर्य्यात् ॥ दक्षिणत उ हैके उपदधाति पुरस्तात् त्वेवैना उपदध्यात् ॥ सैषा ब्रह्मचितिः[१] । सा प्रजापतिचितिः[२] । सर्षिचितिः[३] । सा वायुचितिः[४] । सा स्तोमचितिः[५] । सा प्राणचितिः[६] ॥ अतो यतमदेवं कतमच्च विद्यात् तेन हैवास्यैषार्षेयवती बन्धुमती चितिर्भवति ॥ अथ लोकम्पृणे उपदधाति अस्यां स्रक्त्याम् ॥ पुरीषं निवपति ॥



५—पञ्चमीचितिमुपदधाति ।

असपत्ना उपदधाति । सर्वत उपदधाति । परार्द्धे उपदधाति ॥ अथ विराज उपदधाति । ता दशदशोपदधाति सर्वतः ॥ स पुरस्तादुपदधाति । अथ पश्चात् ॥ अथ दक्षिणतः । अथोत्तरतः । अथ मध्ये । तां प्राचीं तिरश्चीमुपदधाति ॥ २ ॥

अथ छन्दस्या उपदधाति । ताश्चत्वारिंशत् । ता दश दशोपदधाति सर्वतः । एवश्छन्दः[१] । वरिवश्छन्दः[२] । शम्भूश्छन्दः[३] । परिभूश्छन्दः[४] । आच्छच्छन्दः[५] । मनश्छन्दः[६] । व्यचश्छन्दः[७] । सिन्धुश्छन्दः[८] । समुद्रश्छन्दः[९] । सरिरंछन्दः[१०] । ककुप्छन्दः[११] । त्रिककुप्छन्दः[१२] । काव्यश्छन्दः[१३] । अङ्कुपंछन्दः[१४] । अक्षरपङ्क्तिश्छन्दः[१५] । पदपङ्क्तिश्छन्दः[१६] । विष्टारपङ्क्तिश्छन्दः[१७] । क्षुरोभ्रजश्छन्दः[१८] । आच्छच्छन्दः[१९] । प्रच्छच्छन्दः[२०] । संयच्छन्दः[२१] । वियच्छन्दः[२२] । बृहच्छन्दः[२३] । रथंतरं छन्दः[२४] । निकायश्छन्दः[२५] । विवधश्छन्दः[२६] । गिरश्छन्दः[२७] । भ्रजश्छन्दः[२८] । संस्तुप्छन्दः[२९] । अनुष्टुप्छन्दः[३०] । एवश्छन्दः[३१] । वरिवश्छन्दः[३२] । बयश्छन्दः[३३] । वयस्कृच्छन्दः[३४] । विष्पर्द्धाश्छन्दः[३५] । विशालं छन्दः[३६] । छदिश्छन्दः[३७] । दूरोहणं छन्दः[३८] । तन्द्रं छन्दः[३९] । अङ्कांङ्कं छन्दः[४०] । अर्वाचीश्च पराचीश्चोपदधाति ॥ ता वा एताश्चत्वारिंशदिष्टकाश्चत्वारिंशद् यजूंषि, तदशीतिः ॥ ३ ॥

अथ स्तोमभागा उपदधाति । ता एकान्न त्रिंशत् त्रेधाविहिताः । तद्धैके त्रिंशत्तमीमुपदधाति । न तथा कुर्य्यात् । अति ते रेचयन्ति–एकविंश सम्पदमथो गायत्री सम्पदम् ॥ ता आषाढायै वेलयोपदधाति सर्वतः ॥ अथैनाः पुरीषेण प्रच्छादयति ॥ लोकम्पृणान्ता अन्याश्चितयो भवन्ति । नात्र लोकम्पृणामुपदधाति । अथ तूष्णीमत्र पुरीषं निवपति । तत्र विकर्णीं च स्वयमातृण्णां चोपदधाति, हिरण्यशकलैः प्रोक्षति । अग्निमभ्यादधाति ॥

नाक सद उपदधाति । दिक्षूपदधाति–ऋतव्यानां वेलया । अन्तः स्तोमभागम् ॥ स पुरस्तादुपदधाति । अथ दक्षिणतः । अथ पश्चात् । अथोत्तरत् । अथोत्तरतः । अथ मध्ये ॥ १ ॥ अथ पञ्चचूडा उपदधाति । स पुरस्तादुपदधाति—

अयं पुरोहरिकेशः सूर्यरश्मिः । तस्य रथगृत्सश्च रथौजाश्च सेनानी ग्रामण्यौ । पुञ्जिकस्थ ता च ऋतुस्थला चाप्सरसौ । दंदणवः पशवोहेतिः, पौरुषेयोवधः प्रहेतिः ॥१॥

अथ दक्षिणतः—

अयं दक्षिणा विश्वकर्मा । तस्य रथस्वनश्च रथेचित्रश्च सेनानी ग्रामण्यौ । मेनका च सहजन्या चाप्सरसौ । यातुधाना हेतिः, रक्षांसि प्रहेतिः ॥ २ ॥

अथ पश्चात्—

अयं पश्चाद् विश्वव्यचाः। तस्य रथप्रोतश्चासमरथश्च सेनानी ग्रामण्यौ। प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ। व्याघ्रा हेतिः सर्पाः प्रहेतिः॥ ३॥

अथोत्तरतः—

अयमुत्तरात् संयद्वसुः। तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानी ग्रामण्यौ। विश्वाची च घृताची चाप्सरसौ। आपोहेतिः, वातः प्रहेतिः॥ ४॥

अथ मध्ये—

अथ मुपर्य्यर्वाग्वसुः। तस्य सेनजिच्च सुषेणश्च सेनानी ग्रामण्यौ॥ उर्वशी च पूर्वचित्तिश्चाप्सरसौ। अवस्फूर्जन् हेतिः, विद्युत् प्रहेतिः॥ ५॥

ता वा एता दशेष्टका उपदधाति। ता उ वै पञ्चैव द्वे द्वे ह्युपदधाति॥ ता उत्तमायां चिता उपदधाति। अथैने अन्तरा पुरीषं निवपति॥ अथातोऽन्वावृतम्। पुरस्तादुपधाय दक्षिणतः पश्चादुत्तरतो मध्ये उपदधाति॥ अथोत्तराः। पुरस्तादेवाग्रे उपधाय दक्षिणत उत्तरतो मध्ये पश्चादुपदधाति॥ छन्दस्या उपदधाति। ता एकत्रिंशत्। त्रिचान्युपदधाति॥ तिस्रोगायत्रीः पूर्वार्द्धे उपदधाति। त्रिष्टुभो रेतः सिचोर्वेलयोपदधाति। स यावति पुरस्तात् स्वयमातृण्णायै त्रिष्टुभ उपदधाति तावति पश्चाज्जगतीः। मध्ये स्वयमातृण्णा। यावत्यु वा एतस्यै पुरस्तात् त्रिष्टुभस्तावति पश्चाज्जगत्यः। अथानन्तर्हिता जगतीभ्योऽनुष्टुभ उपदधाति॥ अथान्तरेणा त्रिष्टुभश्च ककुभश्च बृहतीरुपदधाति। अथानन्तर्हिता गायत्रीभ्य उष्णिह उपदधाति। पार्श्वतः पङ्क्तीरुपदधाति॥ यद्वर्षीयश्छन्दस्तद्दक्षिणत उपदधाति। उदरमतिच्छन्दाः॥ पुरीषवतीमुपदधाति। ते संपृष्टे उपदधाति। पुरीष संहिते भवतः॥ ते प्राच्या उपदधाति। बहिः स्तोमभागम्। ते दक्षिणतः स्वयमातृण्णाया उपदधाति। अथ प्रथमायां चिता उत्तरतः स्वयमातृण्णायास्ते उपदधाति। द्विपदास्तिस्रः पश्चादुपदधाति।

गार्हपत्यमुपदधाति मध्यतः बहिर्वेदिवा एष चितो भवति। तं वा एतैरेव यजुर्भिरेतयावृता चिनोति। तमेवैतदाहृत्येहोपदधाति॥ अष्टाविष्टका उपदधाति॥ अथ पुनश्चितिमुपदधाति मध्यतः॥ तां हैके जघनार्द्धे उपदधति पुच्छसन्धौ। न तथा कुर्य्यात्। मध्य एवोपदध्यात्। अष्टाविष्टका उपदधाति। पञ्चकृत्वः सादयति॥ तद्धैके जघनार्द्धे गार्हपत्यमुपदधाति पूर्वार्द्धे पुनश्चितिम्। न तथा कुर्य्यात्। उत्तरामेवैनामुप-

दध्यात् ॥ ऋतव्या उपदधाति । ताः सर्वासु चितिषूपदधाति । ता वै नाना प्रभृतयः समानोदर्काः ॥ द्वे इष्टके भवतः ॥ सकृत् सादयति ॥ स पुरस्तात् स्वयमातृण्णायै च विश्वज्योतिश्च ऋतव्ये उपदधाति । अथ प्रथमायै स्वयमातृण्णायै, प्रथमायै च विश्वज्योतिष उपरिष्टाद् ऋतव्योपदधाति । ता न व्यूहेत् । ता नान्यया यजुष्मत्येष्टकयोपरिष्टादभ्युपदध्यात् ॥ ता हैता एव संयान्यः । तदुह चरकाध्वर्य्यवः अन्या एव संयानीरित्युपदधाति । न तथा कुर्य्यात् । एता उ एव संयान्यः ॥ अथ विश्वज्योतिषमुपदधाति ॥ स पुरस्तात् स्वयमातृण्णायै विश्वज्योतिषमुपदधाति । अथ प्रथमायै स्वयमातृण्णायै उपरिष्टाद् विश्वज्योतिषमुपदधाति ॥ अथ मध्यमायै स्वयमातृण्णायै उपरिष्टाद् विश्वज्योतिषमुपदधाति ॥ सादयित्वा सूददोहसाधिवदति ॥ ता हैता एव संयान्यः तदुह चरकाध्वर्यवोऽन्या एव संयानीरित्युपदधाति, न तथा कुर्य्यात् । एता उ एव संयान्यः ॥

अथ लोकम्पृणामुपदधाति । तां सर्वासु चितिषूपदधाति । सैषैकैव भवति ॥ अथ या द्वितीया—मिथुनं तत् । एकेन यजुषा बह्वीरिष्टका उपदधाति । अथेतराः पृथङ् नाना यजुर्भिरुपदधाति ॥ स वा अस्यां स्रक्त्यां प्रथमे उपदधाति । अथेतः । अथेतः । अथेतः । अथातः ॥ स यद्यत्रैव प्रथमे उपदधाति, तदुत्तमे अनूपदध्यात् । न सादयति । सूददोहसाधिवदति । स वै यजुष्मतीरुपदधाय लोकम्पृणया प्रच्छादयति । स वा आत्मन्नेव यजुष्मतीरुपदधाति न पक्षपुच्छेषु ॥ उभयीर्यजुष्मतीश्च लोकम्पृणाश्चात्मन्नुपदधाति ॥ अनूचीश्च तिरश्चीश्चात्मन्नुपदधाति, पराचीरेव पक्षपुच्छेषु । स वै स्वयमातृण्णां लोकम्पृणया प्रच्छादयति । तया सर्वमात्मानं प्रच्छादयति स यस्यां स्रक्त्यां प्रथमे उपदधाति ततोदशभिर्दशभिः सं छादयन्नेति आ स्वयमातृण्णायै । स ते नैव दक्षिणावृज्जघनेन स्वयमातृण्णां सं छादयन्नेति आनूक्यायै । अथ पुनरेत्य तमवधिं सं छादयति । आत्मानमग्रे संछादयति, अथ दक्षिणं पक्षम् । अथ पुच्छम् । अथोत्तरम । तद्दक्षिणावृत् । तद्धि देवत्रा ॥ न भिन्नां न कृष्णामुपदध्यात् । नाभिन्नां परास्येत् । धिष्ण्येभ्यः प्रति संख्याय या विराजमतिरिच्येरन्, नोत्तरामुद्धवेयुः, ताभिरवोत्करे उत्किरेत् ॥ अथात इष्टकामात्राणामेव । पादमात्रीः प्रथमायां चोत्तमायां च चित्योरुपदध्यात् ॥ ऊर्वस्थमात्र्यो वर्षिष्ठाः स्युः । त्र्यालिखितवत्यस्तिस्रश्चितयः स्युः । अपरिमितालिखिते द्वे । सर्वास्त्वेव त्र्यालिखितवत्यः स्युः ॥ अथात इष्टकानामेवावपनस्य ॥ यां कां च यजुष्मतीमिष्टकां विद्यात् तां मध्यमायां चिता उपदध्यात् ॥ तदाहुः—नोपदध्यादिति । स वा उपैव दध्यात् । स वै नैवोपदध्यात् ॥

अथ पुरीषं निवपति ॥ स वै स्वयमातृण्णाया मावपति । तेन सर्वमात्मानं प्रच्छादयति ॥ न स्वयमातृण्णायामावपेदित्युहैक आहुः । स वा एव वपेत् । स्वयमातृ-

रणायामोऽय अनूक्यया संछादयन्नेति—आ—परिश्रिद्भ्यः। स तेनैव दक्षिणावृ-जघनेन स्वयमातृण्णां संछादयन्नेत्या पुनरानूक्यायै ॥ आत्मानमग्रे संछादयति। अथ दक्षिणं पक्षम्। अथ पुच्छम्। अथोत्तरम्। तद् दक्षिणावृत्। तद्धि देवत्रा ॥ ऐन्द्र्याऽनुष्टुभा निवपति। तदेतदर्द्धमग्नेर्यत्पुरीषमर्द्धमैष्टकम् ॥ अथ विकर्णीं च स्वयमातृण्णां चोपदधाति। उत्तमे उपदधाति। पूर्वामुत्तरां विकर्णीमुपदधाति। त्रिष्टुभाऽऽग्नेय्या—अनिरुक्तया ॥ अथ स्वयमातृण्णामुपदधाति। नानोपदधाति। सकृत् सादयति। ते वा उभे एव शर्करे भवत उभे स्वयमातृण्णा ॥ अथैनेसूददोहसाधिवदति। सा वा एषैकासती सूददोहाः सर्वा इष्टका अनुसञ्चरति ॥ अथ स्वयमातृण्णासु सामानि गायति। स वै भूर्भुवः स्वरित्येतासु व्याहृतिषु गायति। तानि वै नाना प्रस्तावानि समाननिधनानि ॥ अथैनं हिरण्यशकलैः प्रोक्षति। एतद्वा अस्मिन् पुरस्ताद् रम्यां तनूं मध्यतो दधाति। रुक्मं च पुरुषं च। अथैनमेतत् सर्वमेवोपरिष्टाद् रम्यया तन्वा प्रच्छादयति॥ द्वाभ्यां द्वाभ्यां शताभ्यां पञ्चकृत्वः सहस्रेण ॥ पश्चादग्ने प्राङ् तिष्ठन्। अथोत्तरतो दक्षिणा। अथ पुरस्तात् प्रत्यङ्। अथ जघनेन परीत्य दक्षिणत उदङ् तिष्ठन्। तद्दक्षिणावृत्। तद्धि देवत्रा ॥ अथानुपरीत्य पश्चात् प्राङ् तिष्ठन् ॥ तथो हास्यैतत् प्रागेव कर्म कृतं भवति ॥

---

६—शतरुद्रियम्।

अथातः शतरुद्रियं जुहोति। जर्तिलैर्जुहोति। अर्कपर्णेन जुहोति। परिश्रित्सु जुहोति ॥ गवेधुकासक्तुभिर्जुहोति। अर्कपर्णेन जुहोति परिश्रित्सु जुहोति। उत्तरार्द्धेऽग्नेरुदङ् तिष्ठन् जुहोति। स वै जानुदघ्ने प्रथमं स्वाहा करोति। अथ नाभिदघ्ने। अथ मुखदघ्ने। स्वाहाकारेण ॥

"नमस्ते रुद्रमन्यव उतोतइषवे नमः बाहुभ्यामुतते नमः"–इति।

चतुर्दशैतानि यजूंषि भवन्ति। एष एकदेवत्यो भवति य एष प्रथमोऽनुवाकः ॥ अथ द्वन्द्विभ्यो जुहोति। "नमो हिरण्य बाहवे सेनान्ये दिशां च पतये नमः"–इति। अथ जातेभ्यो जुहोति। स वा अशीत्यां च स्वाहा करोति प्रथमे चानुवाके ॥ अथाशीत्यामथाशीत्यां च। यानि चोर्ध्वानि यजूंष्यावतानेभ्यः ॥ अथैतानि यजूंषि जपति। "नमोवः किरिकेभ्यो देवानां हृदयेभ्यः। नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यः। नम आनिर्हतेभ्यः ॥" इति ॥ यत्रैतस्माद्देवाच्छङ्केत, तदेताभिर्व्याहृतिभिर्जुहुयात् तथो-

हैनमेष देवो न हिनस्ति ॥ अथोत्तराणि जपति । "द्रापे अन्धसस्पते दरिद्रनीललोहितः। आसां प्रजानामेषां पशूनामाभिर्मारोङ्मोचनः किञ्चनाममत्"–इति॥ अप्येष एकदेवत्यः सप्तैतानि यजूंषि भवन्ति। तान्युभयान्येकविंशतिः सम्पद्यन्ते॥ अथावतानान् जुहोति। "तद्वै सहस्र योजने, असंख्याता सहस्राणि अस्मिन्महत्यर्णवे"–इति। दशैतानवतानान् जुहोति॥ अथ प्रत्यवरोहान् जुहोति। "नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः। नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवः। नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः। तेभ्यो दशप्राचीः दश दक्षिणाः दश प्रतीचीः दशोदीची,र्दशोर्ध्वाः। तेभ्यो नमो अस्तु. तेनो मृडयन्तु, ते यं द्विष्मो यश्च नो द्वेष्टि, तमेषां जम्भे दध्मः"–इति। अमुमेषां जम्भेदधामीतिह ब्रूयाद् यं द्विष्मात्। अपि तन्नाद्रियेत। स्वयं निर्दिष्टो ह्येव स यमेवं विद् द्वेष्टि॥ त्रिष्कृत्वः प्रत्यवरोहति। स्वाहाकारेण। त्रिरित ऊर्ध्वोरोहति। तत् षट्॥ अथ तदर्कपर्णं चात्वाले प्रास्यति॥ अथैनमतः परिषिञ्चति॥ सर्वतो अद्भिः परिषिञ्चति। त्रिष्कृत्वः॥ दक्षिणावृत्॥ अग्नीत् परिषिञ्चति अश्मनो निकक्षाद्दक्षिणात्॥ अपादत्ते तथा द्वितीयं तथा तृतीयम्॥ निधायोदहरणं त्रिर्विपल्ययते। अथ तमश्मानमुदहरणेऽवधाय बाह्येनाग्निं हरति बहिर्वेदि। स वेदेर्दक्षिणायां श्रोणौ प्राङ् तिष्ठन् दक्षिणानिरस्यति। "यं द्विष्मस्तं ते शुगृच्छतु"–इति॥ "अमुं ते शुगृच्छतु"–इति ह ब्रूयाद्–यं द्विष्मात्॥ अपि तन्नाद्रियेत। स्वयं निर्दिष्टो ह्येव स यमेवं विद् द्वेष्टि॥ यदि न भिद्येत, भेत्तवैब्रूयात्। यदा ह्येव स विद्यते अथ तं शुगृच्छति यंद्वेष्टि। अप्रतीक्षमायन्ति॥ प्रत्येत्येष्टका धेनुः कुरुते। आसीनः कुर्वीतेत्युहैक आहुः। तिष्ठंस्त्वेव कुर्वीत। उदङ् प्राङ् तिष्ठन्। पुरस्ताद्वा एषा प्रतीची यजमानं धेनुरुपतिष्ठते। दक्षिणतो वै प्रतीचीं धेनु तिष्ठन्तीमुपसीदन्ति॥ स यत्राभ्याप्नोति तदभिमृश्यैतद् यजुर्जपति—

"इमा मे अग्ने इष्टका धेनवः सन्तु,– एका च दशचान्तश्चपरार्द्धश्च"—इति॥ अपि नाद्रियेत बह्वीः कर्तुम्॥ दश दशेष्टका उपधाय लोकम्पृणयाऽभि मन्त्रयते— "विराजो नाम काम दुधा अक्षीयमाणाः" इति॥ अथैनं विकर्षति मण्डूके नावकयावेतस शाखया। सर्वतो विकर्षति। तानि वंशे प्रबध्य दक्षिणार्द्धेनाग्नेरन्तरेण परिश्रितः प्रागग्रे विकर्षति। अथ जघनार्द्धेनोदक्॥ अथोत्तरार्द्धेन प्राक्॥ अथ पूर्वार्द्धेन दक्षिणा॥इत्यग्रे विकर्षति अथेति,अथेति,अथेति। दक्षिणावृत्। तद्धि देवत्रा। आत्मानमग्रे विकर्षति। अथ दक्षिणं पक्षम्। अथ पुच्छम्। अथोत्तरम्। तद्दक्षिणावृत्। तद्धि देवत्रा॥ आत्मानं पक्ष पुच्छानि विकर्षति पुरस्तादर्वाक्॥ सप्तभिर्विकर्षति। तं वंशमुत्करेन्यस्य, अथैनं सामभिः परिगायति सर्वतः॥ तिष्ठन् गायति। हिंकृत्य गायति। गायत्रं पुरस्ताद्, रथन्तरं दक्षिणे पक्षे। बृहदुत्तरे पक्षे। वामदेव्यमात्मन्। यज्ञायज्ञियं

